अथ संभोगशृंगारः स च बाह्याभ्यन्तरभेदेन द्विविधः । वात्स्यायनेनाप्यस्य द्विविधस्यापि प्रकारांतरेण द्विविधत्वमुक्तम् । " बाह्यमाभ्यंतरं चेति सुरतं द्विविधं स्मृतम् । तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम् । द्वितीयं सुरतं साक्षान्नानाकरणकल्पितम् ॥ " इति । तत्र प्रथमालिंगनरूपं सोपस्करमाह द्वाभ्याम्–अदर्शनः इति ॥ अत्र यत्तच्छब्दाध्याहारेणान्वयः कार्यः । अदर्शने प्रियतमविषयकदर्शनाभावे सति । क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । यथा अदर्शनमश्रवणमभाषणमनुच्चारणमित्याद्यभियुक्तोक्तेः । दर्शनमात्र एव कामोऽभिलाषो यस्याः सा तथोक्ता तावन्मात्राभिलाषिणीत्यर्थः । ततो दृष्ट्वा प्रियतमामिति शेषः । परिष्वंगसुखे आलिंगनजनितसुखे एकं मुख्यं यथा तथा लोला सतृष्णा । " लोलश्चलसतृष्णयोः " इत्यमरः । या आयताक्षीति शेषः । तस्यामायताक्ष्यां कर्णांतविश्रांतलोचनायां प्रियतमायां संपरिष्वक्तायां सत्यां विग्रहयोः शरीरयोः । " शरीरं वर्ष्म विग्रहः " इत्यमरः । अभेदमैक्यमाशास्महे तादृग्गाढालिंगनसुखमनुभवितुमभिलाषास्महे इत्यर्थः । तद्यथा । " प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेदनांतरमेव वायं पुरुषः " इत्यादि श्रुतेः । प्रियतमगाढालिंगनपरिष्वंगे विगलितवेद्यांतरत्वेन ब्रह्मानंदसब्रह्मचारिसुखविशेषसंभवात्तथाविधालिंगनाशंसनं युक्तमेवेति भावः । तदुक्तं रतिरहस्ये । " तत्सौख्यं परतत्त्ववेदनमहानन्दोपमं मूढधीः को वा निंदति सूक्ष्ममन्मथकलावैचित्र्यमूढो जनः । " इति । अन्यत्राप्युक्तम् । " प्रौढालिंगनचुंबनामितसुखं प्रच्छन्नवेद्यांतरम् " इति । वृत्तं पूर्ववत् ॥ २२ ॥

जबतक हम स्त्रीको नहीं देखते तबतक तो देखनेहीकी इच्छा रहती है, देखते हैं तब उससे आलिंगनरसका सुख चाहते हैं और लिपटनेपर यह अभिलाषा रखते हैं कि, यह मृगनयनी हमारे शरीरसे विलग न हो ॥ २२ ॥

**मालती शिरसि जृम्भणं मुखे ।**
**चन्दनं वपुषि कुंकुमाविलम् ॥**

---

१ जृम्भणोन्मुखी इति पाठांतरम् । २ कुंकुमान्वितम् इति पाठान्तरम् ।

वक्षसि प्रियतमा मदालसा ॥
स्वर्ग एव परिशिष्ट आगमः ॥ २३ ॥

एवं परमानन्दानुसंधायकत्वेन परिष्वंगस्यापवर्गरूपत्वमुक्त्वा संप्रति स्वर्गरूपत्वमाह—मालतीति ॥ शिरसि मालती जातिकुसुममालिकेत्यर्थः । " सुमना मालती जातिः " " पुष्पे जातिप्रभृतयः " इत्युभयत्राप्यमरः । " पुष्पमूलेषु बहुलम् " इति लुक् । मुखे जृंभणं मदनमदजनितजृंभश्च । " जृंभस्तु त्रिषु जृंभणम् " इत्यमरः । यद्वा संभोगौत्सुक्यसूचकरागविलासस्फूर्तिश्च । वपुषि कुंकुमाविलं काश्मीरजमिश्रितं घुसृणरसमसृणितं वा । चन्दनं पांटीरपङ्कं च । वक्षसि मदालसा मदेन मन्थरा प्रियतमा गाढालिंगितमत्तकाशिनी चेत्येषोऽयं समुदायः स्वर्गः स्वर्गशब्दवाच्यः आगम एतद्व्यतिरिक्तस्वर्गाभिधायकशास्त्रं तु परिशिष्टः सारानभिज्ञत्वादमुख्यः स्वर्गपदवाच्यमुख्यार्थबोधशून्य इत्यर्थः । अन्यथैतत्परत्वेनैव वदेदिति भावः । स्वर्गसमानसौख्यप्रदोऽयमेवेति परमार्थः । रथोद्धतावृत्तम् । " रान्नराविह रथोद्धता लगौ " इति लक्षणात् ॥ २३ ॥

शीघ्र खिलनेवाली मालतीकी कलियोंकी माला माथेमें पहिने हो, केशरयुक्त चन्दन अंगमें लगाये हो और सुन्दर प्यारी स्त्रियोंको छातीसे लिपटाये हो तो यह जानो कि, शेष स्वर्गका भोग यहां प्राप्त हुआ है ॥ २३ ॥

प्राङ्मेति मनागनागतरसं जाताभिलाषं ततः ।
सव्रीडं तदनु श्लथोद्यममथ प्रध्वस्तधैर्यं पुनः ॥
प्रेमार्द्रं स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो ।
निःसंगांगविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ।२४।

---

१ मनोहर इति पाठान्तरम् । २ आगतः इति पाठान्तरम् । ३ मनागमानितगुण इति पाठांतरम् । ४ श्लथोद्यतमनुप्रत्यस्त० इति पाठान्तरम् । ५ प्रेमार्द्रस्पृ० इति पाठांतरम् ६ प्रगल्भा इति पाठान्तरम् । ७ निःसंगांगविकर्षणादिक इति पाठांतरम् ।

अथाभ्यन्तरसंभोगं वर्णयितुमुपक्रमते–प्रागिति ॥ प्राक्प्रारम्भे मनागल्पं मामेति मास्तु मास्त्विति निषेधवचनेन अनागतोऽनुत्पन्नो रसोऽनुरागविशेषो यस्मिन् तत् । मौग्ध्यादिति भावः । ततो निषेधानन्तरं जातोंऽकुरितोऽभिलाषो वांछा यस्मिन् तत्तथोक्तम् । तदन्वभिलाषानन्तरम् । " अनुर्लक्षणे " इति कर्मप्रवचनीयत्वाद्द्वितीया । नीवीविस्रंसनादिषु मन्दोद्यमनभावो व्रीडा तया सह सव्रीडम् । " तेन सहिते तुल्ययोगे " इति बहुव्रीहिः । " वोपसर्जनस्य " इति सहभावस्य सत्वम् । अथ व्रीडानन्तरम् श्लथोद्यमं निराकरणे शिथिलप्रयत्नम् । पुनरुद्यमनाभावानन्तरम् । पुनः शब्दोऽत्रानन्तरार्थकः। प्रध्वस्तं विगलितं धैर्यं प्रातिलोम्यलक्षणं । यस्मिन् तत्तथोक्तम् । अंगीकृताभिमुख्यमित्यर्थः । ततः प्रेमार्द्रं प्रणयरसपरिप्लुतं ततः स्पृहणीया अन्योन्यमभिलाषणीया निर्भरा उद्वेलाश्च याः रहःक्रीडा एकांतकेलयः । विस्रम्भविहारा इति यावत् । ताभिः प्रगल्भं प्रौढं ततो निःसंगेनाप्रतिबन्धेन अंगविकर्षणेन कुचाद्यवयवमर्दनेनाधिकं सुखं परमानन्दो यस्मिन् तत्तथोक्तं कुलस्त्रीरतं स्वस्त्रीसम्भोगः रम्यं सुन्दरमत्यन्तमनोहरमिति यावत् । एतच्च प्रथमसमागमपरत्वेन द्रष्टव्यमन्यथोक्तव्यवहारासम्भवादिति भावः । कुलशब्दव्यावृत्तिसम्भोगस्यादित आरभ्य प्रागल्भ्यघटितत्वेनोक्तविलक्षणत्वादन्यादृशो द्रष्टव्यः। नायिका तु मुग्धा नायकस्तूत्तमोऽनुकूलः कामतन्त्रेषु निपुणोऽन्यथोक्तक्रमसम्भोगासम्भवादिति मन्तव्यम् । सम्भोगलक्षणमुक्तं रतिरहस्ये । "अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः ॥" इति । अत्र मामेति वागारम्भसूचितैरनुभावैर्जाताभिलाषमित्युक्तेन रताख्यस्थायिभावेन सव्रीडमित्यनेनोपलक्षितैः सञ्चारिभावैरवशिष्टैर्विशेषणैर्यथायथं मानैरनुभावादिविशेषैः कुलस्त्री इत्युक्तेनालम्बनविभावेन प्रलीयमानो रससार्वभौमः शृंगारो निःसंगांगविकर्षणाधिकसुखमित्यनेन परितोषातिशयं प्राप्नोतीति वेदितव्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

पहिले तो नहीं नहीं करना यह मनोहर गुण उसमें है फिर अभिलाषा उत्पन्न होना और लज्जासे शरीरको ढील देना धैर्य छोडना प्रेमरसमेंभी विशेष सराहने योग्य एकान्तक्रीडाका चातुर्य विस्तार

करना, फिर निडर हो अंग खैंचनेका अधिक सुख लाभ करना इससे निश्चय जानो कि, कुलस्त्रीकीही रति अच्छी होती है ॥ २४ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां ।
मुकुलितनयनानां किंचिदुन्मीलितानाम् ॥
उपरिसुरतखेदस्विन्नगण्डस्थलाना- ।
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २५ ॥

अथ यदुक्तं नानाकरणकल्पितमिति तत्र नानाकरणानि धेनुकादिबन्धविशेषास्तेषां मध्ये एकं बन्धविशेषं विवक्षुस्तदनुकूलमुपरिसुरतमाह-उरसीति । उरसि निपतितानां पुरुषायितबन्धवशाद्वक्षःस्थलमधिष्ठितानामत एव स्रस्तधम्मिल्लकानां रतिरभसविश्लथकचप्रचयानाम् । " धम्मिल्लः संयताः कचाः " इत्यमरः । मुकुलितनयनानां सुखपारवश्याल्लज्जानुभावानुकरणाद्वा निमीलितलोचनानामपि तथापि किंचिदुन्मीलितानामीषन्मुकुलितलोचनानाम् । अन्यथाऽनौचित्यादिति भावः । अत एव उपरिसुरते यः खेदः श्रमस्तेन स्विन्नानि स्वेदार्द्राणि गण्डस्थलानि यासां तासाम् । " श्रमः खेदो हि रत्यादेर्जातः स्वेदादि भूमिकृत् । " इति लक्षणात् । वधूनां प्रियतमानां संबंधि अधरमधु अधरामृतं भाग्यशालिनः पिबंति । पुंसः स्त्रीमुखस्य निजमुखसांमुख्यादक्लेशेनाधरं चुंबंतीत्यर्थः । एतच्च पुण्यकृतामेव संभवति न त्वन्येषामत एव भाग्यवन्त इत्युक्तम् । तथा बाह्यसुरतविशेषरूपमपि चुंबनमारभ्याभ्यन्तरांगतया कथितमित्यवगंतव्यम् । पुरुषायितलक्षणमुक्तं रतिरहस्ये । " स्वेच्छया श्रमिणि वल्लभे तथा योषिदाचरति पुरुषायितम् । " इति । नायिकास्तु प्रगल्भाः । " स्मरमंदीकृतव्रीडा प्रौढा संपूर्णयौवना । " इति लक्षणात् । नायिकाः कामतन्त्रकुशला अनुकूलाश्च । स्वभावोक्तिरलंकारः । " स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् । " इति लक्षणात् । मालिनी वृत्तम् ॥ २५ ॥

१ सुरतजनितखेदस्वार्द्रगं० इति पाठान्तरम् ।

छातीपर लेटी हुई हैं, और सुगंधित केश उनके बिखरे हुए हैं आधे नेत्र मूंदे हुए हैं, कुछ कुछ हिल रही हैं, मैथुनके श्रमसे उनके गालोंपर पसीने झलक रहे हैं ऐसी स्त्रियोंके अधरमधुको भाग्यवान्ही पुरुष पान करते हैं ॥ २५ ॥

आमीलितनयनानां यः सुरतरसोऽनुसंविदं भाति ॥
मिथुनैर्मिथोऽवधारितमवितथमिदमेवकामनिर्वहणम् २६॥

अथ ज्ञानपूर्वक एव सुरतानुभवः सार्थको न त्वन्य इत्याह--अमीलितेति ॥ आमीलितनयनानां सुखपारवश्यादरमुकुलितनयनानां यूनां यः सुरतरसः सुरतास्वादः संविदमनुसृत्य भाति । अयमेतादृश इति ज्ञानगोचरतया प्रतिभातीत्यर्थः । इदमेव ज्ञानपूर्वकसुरतानुभवप्रतिमानमेवावितथमव्यर्थं सार्थकमित्यर्थः । कामस्य मन्मथस्य कामपुरुषार्थस्य वा निर्वहणं प्रतिष्ठापन्नमुज्जीवनमिति यावत् । न त्वन्यदाभासत्वादिति भावः । मिथुनै रसज्ञैः स्त्रीपुरुषैः । "स्त्रीपुंसौ मिथुनं द्वंद्वम्" इत्यमरः । मिथोऽन्योन्यमवधारितं निश्चितम् । अनुभविनामेवार्थनिश्चयसंभवादिति भावः । ज्ञानपूर्वकसुरतानुभव एव कामपुरुषार्थ इति फलितार्थः । अत इत्थंभूतसुरतमेव कर्तव्यं न त्वन्यादृशं तस्य क्लेशमात्रफलकत्वादिति तात्पर्यम् । आर्यावृत्तभेदः ॥ २६॥

आलस्य भरे नेत्रवाली स्त्रियोंका कामसे तृप्त होना यही स्त्री पुरुष दोनोंका परस्पर कामपूजन है ॥ २६ ॥

इदमनुचितमक्रमश्च पुंसां ।
यदिह जरास्वपि मान्मथा विकाराः ॥
तदपि च न कृतं नितम्बिनीनां ।
स्तनपतनावधि जीवितं रतं वा ॥ २७ ॥

अथ सुरतावधिं कथयन्निगमयति--इदमिति ॥ इहास्मिन् लोके पुंसामिदमनुचितमन्यायमक्रमो निर्मर्यादा च । किमिदमित्याशंकायामाह । जरासु वार्धकावस्थास्वपीत्यर्थः । मान्मथा विकाराः सुरतव्यासङ्गाः कृता इति यत्

१ करोत इति पाठान्तरम् ।

इदमिति संबंधः । किं तु यौवनावधिकसुरतमेव न्याय्यं मर्यादागोचरं चेत्यर्थः । तदुपरिवर्तनसुरतस्याभासत्वादिति भावः । तथा नितम्बिनीनां स्त्रीणां च तदनुचितम् । किं तदित्यत आह । स्तनपतनमवधिर्मर्यादा यस्य तत्तथोक्तं जीवितं जीवनं वा रतं सुरतं वा न कृतमिति यत् ब्रह्मणेति शेषः । तदिति संबन्धः । स्त्रीणां तावत् स्तनपतनावधिकमेव जीवनं कर्तव्यं सुरतमपि तदवधिकमेवान्यथा । "तारुण्यं पञ्चपञ्चाशदवधिपरतो वृद्धतामेति नारी" इति कामशास्त्रोक्तेर्वृद्धानां संभोगानर्हत्वात् । "त्यजेदंत्यकुलोद्भूतां वृद्धस्त्रीं कन्यकां त्यजेत्" इति निषेधस्मरणात् । "आलिंगनं लम्बपयोधराणां स्त्रीणां च दुःखं त्रयमेव भूमौ ।" इति लम्बस्तननितंबिनीसंभोगस्य दुःखरूपत्वाच्चेति भावः । यथाह माघः । "अयमतिजरठाः प्रकामगुर्वीरलघुविलंबिपयोधरोपरुद्धाः । सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥" इति । अत्र स्त्रीणां पुरुषाणां च यौवनकृतसुरतमेव रमणीयमिति तात्पर्यम् । पुष्पिताग्रावृत्तम् । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।" इति लक्षणात् ॥ २७ ॥

यह विधाताने पुरुषोंमें बडी अनुचित और उलटी बात उत्पन्न की है कि बुढापेमेंभी कामका विकार प्रगट होता है ऐसाही स्त्रियोंकाभी नहीं किया कि, जबलों स्तन न गिरें तभीलों जिये और कामचेष्टा रक्खें ॥ २७ ॥

**एतत्कामफलं लोके यद्द्वयोरेकचित्तता ॥**
**अन्यचित्तकृते कामे शवयोरिव संगमः ॥ २८ ॥**

लोके स्त्रीपुरुषयोरेकचित्तता एव कामफलमित्याह–एतदिति ॥ लोके यत् द्वयोः स्त्रीपुरुषयोरेकचित्तता एकचित्तत्वमेतदेव कामस्य फलमस्ति । अन्यस्मिन् पुरुषे अन्यस्यां योषिति यच्चित्तं तेन कृते कामे सति शवयोः मृतयोः संगम इव भवतीति शेषः ॥ २८ ॥

स्त्री और पुरुषके समागममें एकचित्त हो जाना कामदेवका यही मुख्य फल है । यदि काममें दोनोंका चित्त और ठौर रहा तो मृतकोंकासा संगम होता है ॥ २८ ॥

**राजंस्तृष्णांबुराशेर्न हि जगति गतः कश्चिदेवाव-
सानं। को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते
यौवने सानुरागे॥ गच्छामः सद्म तावद्विकसित-
कुमुदेंदीवरालोकिनीनामाक्रम्याक्रम्य रूपं झटिति
न जरया लुप्यते प्रेयसीनाम्॥ २९॥**

यदुक्तं सुरतानुगुण्येन यौवनस्यात्यंतावश्यकत्वं त्रिभिर्वर्णयाति । तत्रादौ चिरप्रवासनिर्विण्णानां राजसेवातत्पराणां यूनां वचनमेतत्--राजन्निति ॥ हे राजन्, जगत्यस्मिन् लोके कश्चिदेव कश्चिदपि पुमान् तृष्णा धनलिप्सा स एवांबुराशिः समुद्रस्तस्यावसानं पारं न गतो हि न प्राप्तः खलु किंतु मग्न एवेत्यर्थः। तृष्णाया अपरिच्छिन्नत्वांबुराशित्वरूपणम् । अथ भावत्कांक्षितार्थलाभेऽपि न तैः प्रयोजनसिद्धिरित्याहुः। प्रभूतैःप्रचुरैः "प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः। अर्थैर्धनैः को वार्थः किं प्रयोजनं न कोऽपीत्यर्थः। अकिंचित्करत्वादिति भावः। "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु"। इत्यमरः। कस्मिन् कथंभूते सति। स्ववपुषि निजशरीरे अधिकरणे सानुरागे संभोगेच्छाजनके अनुरागसहिते वा यौवने गलिते सति कोऽर्थ इति संबन्धः।. धनलाभादपि यौवनमेवास्माकं बलीय इत्यर्थः। अतस्तावत्तत्पूर्वमेव सद्म स्वगृहं प्रति गच्छामो यास्यामः। यावद्यदा विकसितान्युत्फुल्लानि कुमदानि कैरवाणि इन्दीवराणि नीलोत्पलानि च तत्सदृशान्यालोकानि नेत्राण्यासां सन्तीति तथोक्तानां सितासिताब्जदलमनोहरनयनानामित्यर्थः। "सिते कुमुदकैरवे" "इन्दीवरं च नीलेऽस्मिन्" इत्युभयत्राप्यमरः। प्रेयसीनां प्रियतमानां संबंधि रूपं यौवनप्रयुक्तसौंदर्यं जरयाक्राम्याभीक्ष्णमाक्रम्य झटित्यंजसा । "स्राग्झटित्यञ्जसाह्नाय" इत्यमरः। न विलुप्यते न ह्रियते तावदिति सम्बन्धः। अन्यथा शशकापाये बिलखननवद्गमननैष्फल्याद्वृद्धस्त्रीगमननिषेधाच्चेति भावः। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।" इत्यमरः। स्रग्धरा वृत्तम्॥ २९॥

---

१ नयनेन्दीवरालोकनानांइति पाठान्तरम्। २ यावच्चाक्रम्य इति पाठांतरम्।

हे महाराज ! इस तृष्णारूपी समुद्रके कोई पार न गया और जब हमारी अनुरागभरी युवा अवस्था देहहीमें जीर्ण हो गई तब अधिक द्रव्यही प्राप्त करके हमको क्या करना है तो शीघ्रही अपने घर चले जांय ऐसा न हो कि विकासित कुमुद और कमल ऐसे नेत्रवाली हमारी प्यारियोंका रूप वृद्धावस्था घुला २ बिगाड न डाले, यहां कुमुद रात्रिविकासी और कमल दिनविकासीसे अभिप्राय है इससे यह सूचना होती है कि, वे रातदिन हमारा मार्ग देखती होंगी ॥ २९ ॥

**रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु- ।**
**र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ॥**
**कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं ।**
**लोकेऽस्मिन्नह्यनर्थव्रजकुलभवनं यौवनादन्यदस्ति ३०**

अथान्यानर्थमूलत्वमाह--रागस्येति ॥ रागस्य मात्सर्यस्यैकमगारं मुख्यायतनमेतुरागैकस्थानमिति वा । तथा नरकशतेषु निरयपरंपरासु यानि महादुःखानि तीव्रयातनास्तेषां प्राप्तिहेतुः प्राप्तिसाधनम् । अगम्यागमनादिदुष्कर्मप्रवर्तकत्वादिति भावः । मोहस्य कृत्यंतराशक्तिरूपस्य जन्मोत्पत्तिबीजं जन्मकारणम् । "हेतुर्ना कारणं बीजम्" इत्यमरः । ज्ञानताराधिपस्य प्रबोधचन्द्रस्य जलधरपटलमभ्रवृन्दम् । ज्ञानप्रकाशप्रतिबन्धकमित्यर्थः । कन्दर्पस्य कामदेवस्य एकं मित्रं मुख्यबन्धुस्तदुद्रेकामित्यर्थः । प्रकटितः प्रवृद्धो विविधो नानाविधः स्पष्टः प्रकाशश्च दोषप्रबन्धः पातकसंबन्धो यस्य तत्तथोक्तं यद्यौवनामिति शेषः। अतोऽस्मिन् लोके तस्माद्यौवनादन्यादितरत् अनर्थानामुक्तविधानां व्रजस्य समूहस्य कुलभवनमुत्पत्तिनिकेतनं नास्ति हि । इदमेवात्यंतानर्थमूलामित्यर्थः । तदुक्तम् । " यौवनं रूपसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ " वृत्तं पूर्ववत् ॥ ३० ॥

---

१ नर्थं निजकुलदहनं इति पाठान्तरम् ।

अनुरागका घर, सैकडों नरकोंके दुःख प्राप्त होनेका हेतु मोहकी उत्पत्तिका बीज ज्ञानरूपी चंद्रमाके ढाकनेका मेघ, कामदेवका एकही मित्र, अनेक दोषोंका प्रगट करनेवाला और वैराग्य और नीतिका हरण करनेवाला इस लोकमें युवा अवस्थाके व्यतिरिक्त भिन्न दूसरा अनर्थ नहीं है ॥ ३० ॥

**शृंगारद्रुमनीरदे प्रसृमरक्रीडारसस्रोतसि ।**
**प्रद्युम्नप्रियबान्धवे चतुर[2]वाङ्मुक्ताफलोदन्वति ॥**
**तन्वीनेत्रचकोरपार्वण[3]विधौ सौभाग्यलक्ष्मीनिधौ ।**
**धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ३१**

इत्थंभूते यौवने कश्चिदेव निर्विक्रिय इत्याह--शृंगारेति ॥ शृंगारः संभोगविप्रलंभरूपशृंगाररस एव द्रुमो वृक्षस्तस्य नीरदे अम्बुवाहे अंकुरितत्वकन्दलितत्वपल्लवितत्वपुष्पितावरूपावस्थाभिः परिपोषावह इत्यर्थः । प्रसृमरो व्यापनशीलो यः क्रीडारसः मन्मथकेलिरसस्तस्य स्रोतसि रसप्रवाहे यथेच्छाविहारान्वित इत्यर्थः । प्रसृमरेत्यत्र " सृघस्यदःक्मरच् " । प्रद्युम्नस्य कन्दर्पस्य प्रियबांधवे आप्तबंधौ । स्वार्थेऽण्प्रत्ययः । " प्रद्युम्नो मीनकेतनः । कन्दर्पो दर्पकोऽनंगः " इत्यमरः । चतुरवाचो निपुणवाक्यान्येव मुक्ताफलानि मौक्तिकमणयस्तेषामुदन्वति समुद्रे सरसलापोत्पत्तिनिकेतनभूत इत्यर्थः । "उदन्वानुदधौ च " इति निपातनात्साधुः । समुद्रस्य मुक्ताकरत्वमुक्तं रत्नशास्त्रे । "करीक्षुजीमूतवराहशंखमत्स्यादिशुक्त्यर्णववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥ " इति । तन्वीनां विलासिनीनां नेत्राण्येव चकोराश्चंद्रिकापायिपक्षिविशेषास्तेषां पार्वणविधौ पूर्णचन्द्रे तदुल्लासक इत्यर्थः पर्वणि भवः पार्वण इति विग्रहः । " विधुर्विष्णौ चन्द्रमसि " इत्यमरः । सौभाग्यलक्ष्म्याः सौंदर्यसम्पदो

---

१ प्रचुरतः इति पाठान्तरम् । २ चतुरता इति पाठान्तरम् ।
३ पारणाविधौ इति पाठान्तरम् ।

निधौ निधाने कदाचिदपि स्वावस्थानन्ददशाय सौंदर्यलक्ष्मीर्न क्षयिते इत्यर्थः । नवयौवने नूतनवयसि प्राप्ते सति कोऽपि धन्यः कश्चिदेव सुकृती विक्रियां मन्मथविकारं न कलयति न प्राप्नोति । ईदृशस्तु विरल इति भावः ॥ श्लोकद्वयेऽपि निरवयवरूपकालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

श्रृंगाररूपी वृक्षोंका सींचनेहारा मेघ, विस्तारित क्रीडारसका सोता, कामदेवका प्यारा भ्राता, चतुरतारूपी मोतियोंका समुद्र, स्त्रियोंके नेत्ररूपी चकोरका पूर्ण चन्द्र और सौभाग्यलक्ष्मीका एक पात्र ऐसी युवा अवस्था पाकर जो पुरुष विकारको नहीं प्राप्त होता सो धन्य है ॥ ३१ ॥

**संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलंक-।**
**व्यासंगव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ॥**
**यद्येताः प्रोद्यदिंदुद्युतिसिचयभृतो न स्युरम्भोजनेत्राः ।**
**प्रेंखत्कांचीकलापाः स्तनभरविनमन्मध्यभाजस्तरुण्यः ॥ ३२ ॥**

यदुक्तं यौवनस्यानर्थमूलत्वं तत् कामिनीपरित्यागेऽत्यन्तदुरापास्तमित्याशंक्य तासामपरित्याज्यतां त्रिभिर्वर्णयति--संसार इति ॥ अमलधियो निर्मलमतयो महांतः मानसं निजं मनः असारे निःसारे अस्मिन् परिवर्तमाने संसारे कलत्रादिपोषणव्यासङ्गरूपे कुनृपतिभवनद्वारस्य कुत्सितराजमन्दिरस्य प्रतीहारस्य सेवा अनुवर्तनमेव कलंकोऽपवादस्तत्र यो व्यासङ्गोऽत्यासक्तिस्तेन व्यस्तं धैर्यं धीरत्वं यस्य तत्तथोक्तम् । ईदृक्कष्टकर्मासक्तिमलिनमित्यर्थः । कथं संविदध्युः कुर्युः न कथंचिदपीत्यर्थः । किं न स्याच्चेदित्यत आह ॥ प्रोद्यन्नुदिततरो य इन्दुस्तस्य द्युतिरिव द्युतिर्येषां तानि चन्द्रधवलानि मांजिष्ठानि वा । उद्यद्विशेषणसामर्थ्यात् तानि सिचयान्यंशुकानि बिभ्रतीति तथोक्ताः । अम्भोजे इव नेत्रे यासां ताः पद्मपलाशविशाललोचना इत्यर्थः । प्रेंखत्कांच्यः क्वणद्रशना एव कलापाः भूषणानि यासां ताः । यद्वा कांच्यो

१ सेवावलम्ब० इति पाठान्तरम् । २ निचय इति पाठान्तरम् ।
३ भागास्त० इति पाठान्तरम् ।

भूषणानि यासां ताः । "कलापो भूषणे बर्हे " इत्यमरः । स्तनभरेण कुचकुम्भगौरवेण विनमन्ति अवनतानि मध्यान्यवलग्नानि भजन्तीति तथोक्ताः । पीवरकुचाः कृशोदर्यश्चेत्यर्थः । एतेन सौंदर्यातिशय उक्तः । एताः प्रसिद्धास्तरुण्यो युवतयो न भवेयुर्यदि तर्हि कथं संविदध्युरिति सम्बन्धः । अतः विशिष्टतरुणीनां विद्यमानत्वादेव सुधियोऽप्येवंभूता भवन्तीत्यर्थः । तस्मात्तरुण्यो दुष्परिहरा इति भावः । तदुक्तम् । " असाधाविह संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का वा स्यात्परिकल्पना ॥ " इति । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थसमर्थकहेतुत्वात्काव्यलिंगभेदः । स्रग्धरावृत्तम् ॥ ३२ ॥

उदित चन्द्रमांकीसी कांतिधारी, कमलनेत्रवाली, झुलती हुई करधनीकी लरियोंवाली और स्तनभारसे झुकी कटिवाली युवती स्त्री यदि न हो अर्थात् इनसे स्नेह न होय तौ इस असारसंसारमें निर्मल बुद्धिवाले मनुष्य खोटे राजोंके द्वारकी सेवा नानाभांतिके कलंकसे अधीरचित्त होकर क्यों करें ॥ ३२ ॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावरुग्णद्रुमे ।
गंगाधौतशिलातले हिमवतःस्थाने स्थिते श्रेयसि ॥
कः कुर्वीत शिरःप्रणाममलिनं म्लानं मनस्वी जनो ।
यद्वित्रस्तकुरंगशावनयना न स्युःस्मरास्त्रंस्त्रियः ३३॥

सिद्धेति ॥ सिद्धैर्योगिभिरध्यासिता अधिष्ठिता कन्दरा गुहा यस्मिन् तत्तथोक्ते । एतेन तपःसिद्धिहेतुत्वं सूच्यते । हरस्य नित्यसन्निहितस्य यो वृषो वाहनभूतो महोक्षस्तस्य स्कन्धेन अंसपीठेन ककुदेति यावत् । अवरुग्णा भग्ना द्रुमा तत्तथोक्तम् । " रुजोभंगे " कर्मणि क्तः । " ओजितश्च " इति निष्ठानत्वे णत्वम् । एतेनाखिलश्रेयःप्रदशिवसांनिध्यमुक्तम् । गङ्गाधौतानि गङ्गाप्रक्षालितानि शिलातलानि यस्मिन् तत्तथोक्तम्।एतेनात्यन्तपवित्रत्वमुक्तम् । अत एव श्रेयसि श्रेष्ठे श्रेयस्करे वा । हिमवतो गिरेः

१ गाढ इति पाठान्तरम् । २ मानं इति पाठान्तरम् । ३ यद्यत्रस्त इति पाठान्तरम् ।

सम्बधिनि स्थाने प्रदेशे स्थिते सति को वा मनस्वी सुमेधाः वीरो जनः। प्रशंसायां विनिः। शिरो निजोत्तमांगं प्रणामेन कुनृपतिपादवन्दनेन मलिनं कलंकितमत एव म्लानमुत्कर्षहीनं कुर्वीत। मलिनं मानमिति पाठे मानं निजाभिमानं कर्म शिरःप्रणामेन निजोत्तमांगविनमनेन मलिनं प्रतिष्ठाहीनं कुर्वीत। न कोऽपीत्यर्थः। कुतः यद्यस्मात्कारणात् त्रित्रस्तकुरंगशावनयनाः पद्मिनीजातित्वाच्चकितबालहरिणेक्षणाः अत एव स्मरास्त्रं महावीरस्य जगद्विजयसाधनभूतबाण इत्यर्थः। लिंगवचनव्यत्ययो नित्यनपुंसकत्वेन जात्यभिप्रायेण वा। वेदाः प्रमाणं तन्तवः पटस्य समवायिकारणमित्यादिवद्द्रष्टव्य इत्युक्तम्। प्राक् स्त्रियो न स्युश्चेत्। अतः अमोघमदनशस्त्रभूतस्त्रीणामपरित्याज्यतया विद्यमानत्वादेव मनस्विनामपीदृग्दुरवस्थापत्तिरिति भावः। वृत्तमुक्तम् ॥ ३३ ॥

सिद्ध लोग जिस कंदरामें बैठे हैं और महादेवजीका बैल जहां वृक्षोंमें कंधा रगडता फिरता है और गंगाजलसे जहांके पाषाण धोये जाते हैं, ऐसा हिमालयका स्थान कल्याणदायक छोडकर कौन मनुष्य स्त्रीपुरुषलोगोंके समीप जाकर माथा झुकाय प्रणाम कर अपने मानको मलीन करता। यदि भीतियुक्त हरिणशावकनयना कामास्त्रस्वरूप कामिनी घरमें न होती ॥ ३३ ॥

**संसार तव पर्यंतपदवी न दवीयसी ॥**
**अन्तरा दुस्तरा न स्युर्यदि ते मदिरेक्षणाः॥३४॥**

संसारेति ॥ संसार, तव पर्यंतपदवी अवसानसीमा न दवीयसी न दविष्ठा भवति न दूरतरेति यावत्। किं तु नेदीयस्येवेत्यर्थः। दूरशब्दादीयसुनि " उगितश्च " इति ङीप्। " स्थूलदूर० " इत्यादिना पूर्वयणादिपरलोपः। कुतस्ते तव अन्तरा मध्ये दुस्तरा महानद्य इव तरितुमशक्याः। " ईशदुः ० " इत्यादिना खल्प्रत्ययः। मदिरेक्षणाः स्त्रियः न स्युर्यदि न संभाविताश्चेत् न दवीयसीति संबन्धः। संभावितत्वादेव दवीयसीत्यर्थः।

---

१ निस्सार इति पाठान्तरम्। २ रे इति पाठान्तरम्।

एतेन संसारपरगमनप्रतिबंधिन्यः स्त्रियः इत्युक्तम् । तत्परित्यागे तु श्रेयः-संभव इति भावः । पूर्वश्लोकेऽप्यत्रापि च पूर्वतरश्लोकत्वकार्यमुन्नेयम् ॥ ३४ ॥

हे संसार ! तुझसे पार होना कुछ दुस्तर न था यदि अच्छे नेत्रवाली कठिन स्त्रियां बीचमें बाधक न होतीं ॥ ३४ ॥

**दिश वनहरिणीभ्यो वंशकांडच्छवीनां ।**
**कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ॥**
**शकयुवतिकपोलापांडुतांबूलवल्ली- ।**
**दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ३५ ॥**

इत्थं स्त्रीणां परिहर्तुमशक्यत्वे तदासक्तस्य कुतः श्रेयः प्राप्तिरित्याशंकायां तदत्यन्तात्यागवैराग्ययोरप्यैहिकामुष्मिकफलसाधनत्वमेवेति मनसि कृत्वा तदुभयमिदानीं तावन्निरूपयितुं प्रतिजानीते । अथ पक्षद्वयनिरूपणमिति । अथ स्त्रीणामपरित्याज्यकथनान्तरं पक्षयोः विरक्त्यनुरक्तिरूपपक्षयोर्द्वयस्य निरूपणं क्रियत इति शेषः । तत्प्रकारमाविंशतिसमाप्तेर्वर्णयति-दिशीते ॥ हे जनेत्यध्याहार्यम् । वने पुण्यारण्ये हरिणीभ्यः कुरंगीभ्यः तपः-प्रसक्त्या निर्भीतत्वेन तासां समीपवर्तित्वाादिति भावः । उपलकोट्या निशितपाषाणप्रांतेन छिन्नानि लूनानि मूलानि यस्य तथोक्तम् । तत्र लवित्रादिसाधनांतरासंभावान्मूलानामुपलकोटिच्छिन्नत्वमुक्तम् । वंशकांडस्य वंशकरीरस्य छविरिव छविर्येषां तेषाम् । सरसानामित्यर्थः । कुशानां कवलनं ग्रासं वा दिश । तपश्चरणानुसमय इति शेषः । अथवा वधूभ्यः प्रियतमाभ्यः अरुणनखानामग्रैः पाटितं शकलितं शकयुवतान। शकाख्यदेशायतरुणीनां कपोलवदापांडु आसमन्ताद्धवलं यत्तांबूलवल्लीदलं नागवल्लीपत्रं तद्वा दिश संसरणसमय इति शेषः । उक्तोभयमेव परमसौख्यनिदानमुभयत्र स्यादिति भावः । एवमुत्तरत्रापि यथायोगमूहनीयम् । अत्र नखानामारुण्यग्रहणं महाभाग्यलक्षणत्वेन सुखित्वद्योतनार्थम् । तदुक्तं सामुद्रिके । “ पाणिपादतले रक्ते नेत्रांतौ च नखस्तथा । तालुजिह्वाधरोष्ठं च सप्तरक्तः सुखी भवेत् ॥ ” इति । मालिनी वृत्तम् ॥ ३५ ॥

हे मनुष्यो ! तुम या तौ बनमृगियोंके लिये बाँसके दंडके समान छबिवाले पत्थरके अग्रभागसे कटे हुए दर्भोंके ग्रास दो अथवा उत्तम स्त्रियोंके लिये अरुण नखोंसे तोडे हुए शकदेशीययुवतीके कपोलके समान किंचित् पांडुवर्णवाले तांबूल दो ॥ ३५ ॥

असाराः सर्वे[1] ते विरतिविरसाः[2] पापविषया ।
जुगुप्स्यन्तां[3] यद्वा ननु सकलदोषास्पदमिति ॥
तथाप्येतद्भूमौ[4] न हि परहितात्पुण्यमधिकं ।
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥४६ ॥

असारा इति ॥ ननु हे जनेति ते प्रसिद्धाः सर्वे पापहेतुत्वात्पापाः विषयाः शब्दादयः स्रक्चंदनवनितादयो वा असारा अस्थिरा निःसारा इति वा । " सारो बले स्थिरांशे च " इत्यभिधानात् । तथा विरतौ परिणतिसमये विरसा अनर्थकरा इति वा । यद्वा सकलदोषास्पदं रागद्वेषमोहाद्यशेषदोषा इति वा " आस्पदं प्रतिष्ठायाम् " इति निपातनात्सुडागमः । लिंगवचनव्यत्ययस्तु पूर्ववद्द्रष्टव्यः । जुगुप्स्यंतां परित्यज्यताम् । परित्यागो परमसुखलाभादिति भावः । तथा च वक्ष्यति । " स्वयं त्यक्ता ह्येते शमसुखमनंतं विदधति " इति । गुपोर्नित्यम् " इति सन्नंतात्कर्मणि यकि विधौ लोटि तङ् । तथाप्युक्तप्रकारेण विषयाणां जुगुप्स्यत्वेऽप्येतद्भूमौ अस्यां भुवि परहितात्परोपकारकरणादधिकमतिरिक्तं पुण्यं न हि नास्ति खलु " श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रंथकोटिभिः । परोपकारः पुण्याय पापाय परपीडनम् ॥ " इति वचनादिदमेवात्यंतपुण्यमित्यर्थः । अथास्मिन् ससारे च कूवलयदृश उत्पलाक्ष्याः । " अन्यारादितरर्ते ० " इत्यादिना पंचमी । अपरमन्यद्द्रव्यं वस्तु नास्ति । इयमेवात्यंतमनोहरेत्यर्थः । अतः दोषदृष्ट्या विषयान् परित्यज्य शमसुखानुभवतात्पर्येण वा स्थातव्यमन्यथा परहिताच-

---

१ संत्वेते इति पाठान्तरम् । २ विरसायासविषया इतिपाठांतरम् । ३ जुगुप्सतां इति पाठान्तरम् । ४ तथाप्यंतस्तत्त्वे प्रणिहितधियामप्यतिबलस्तदीयोऽनाख्येयः स्फुरति हृदयेकोऽपि महिमा इति पाठान्तरम् ।

रणत्वेन सांसारिकतया वा वर्तितव्यम् । न तु प्रकारांतरेणेति भावः । शिखरिणी वृत्तम् ॥ ३६ ॥

यह सब भोगविषय असार और वैराग्यमें विरस करनेवाले हों और इन्हें सब दोषोंका गृह समझकर यदि लोग निंदाभी करें तथापि हम यह ठीक निवेदन करते हैं कि उस संसारमें पराया हित करनेसे अधिक दूसरा पुण्य नहीं और कमलनयनी स्त्रियोंसे अधिक सुन्दर वस्तु नहीं ॥ ३६ ॥

मात्सर्यमुत्सार्य विचार्यकार्य- ।
मार्याः समर्यादमिदं वदन्तु ॥
सेव्या नितम्बाः किमु भूधराणा- ।
मुत स्मरस्मेरविलासिनीनाम् ॥ ३७ ॥

मात्सर्यमिति ॥ आर्याः पंडिताः मात्सर्यमसूयां पक्षपातमिति यावत् । उत्सार्य निराकृत्य तस्य यथार्थकथनप्रतिबंधकत्वादिति भावः । कार्यं कर्तुं योग्यं विधेयमित्यर्थः । विचार्य ऊहापोहाभ्यां सम्यगालोच्य ततः मर्यादया सन्मार्गानतिक्रमणेन सहितं यथा भवति तथा इदमेतत् वदंतु कथयंतु । किमिदमित्यत आह । धरंतीति धराः । पचाद्यच् । भुवो धरा भूधरास्तेषां भूधराणां नितंबाः कटिदेशाः सेव्याः किमु । आश्रयणीया वा । उत अथवा स्मरस्मेराः स्मरोल्लसिताः मदनमदोत्कटा इत्यर्थः । यद्वा स्मरेण मन्मथावेशेन हेतुना स्मेराः सम्भोगौत्सुक्यसूचकमन्दस्मितसुंदरवदनारविंदा इत्यर्थः । " स्मिङ् ईषद्धसने " इति धातोः " नमिकम्पि० " इत्यादिना रप्रत्ययः । अथवा विषयमात्रविश्रांतिविरहेण विशृंखलवृत्तित्वमदमन्दादिगुण-विशिष्टकटाक्षवीक्षणानि स्मेरशब्दाविवक्षितानि । तदुक्तं भावप्रकाशे । " अपरिच्छिन्नविषयं मदमन्थरमीलितम् स्फुरद्भ्रूपक्ष्मतायुक्तं तत्स्मेरमिति कथ्यते ॥ " इति । तानि च स्मरप्रधानानि यासां ताः स्मरस्मेराणां विलासिनीनां विलसनशीलानां तरुणीनाम् । " वौकषलस० " इत्यादिना

---

१ किल इति पाठान्तरम् ।

घिनुणप्रत्ययः । नितम्बाः कटिप्रदेशा आश्रयणीया वा इदं वदन्त्विति सम्बन्धः । यदि वैराग्यं स्यात्तर्हि गिरिनितम्बाः सेव्याः । अन्यथा विलासिनीनितम्बा इति त्वदीयप्रश्नस्येदमुत्तरं न त्वन्यदस्तीति भावः । "कटकोऽस्त्री नितम्बोऽद्रेः" "पश्चान्नितम्बः स्त्रीकट्याः" इति चोभयत्राप्यमरः । अत्र पूर्वार्धे एकवर्णस्य पुनःपुनरावृत्तेः वृत्त्यनुप्रासः शब्दालङ्कारभेदः । "एकद्विप्रभृतीनां तु व्यञ्जनानां यथा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥" इति लक्षणात् । अयं च नितम्बा इत्यत्र द्वयानामपि नितम्बानां प्रकृतत्वात्केवलप्रकृतत्वगोचरेण एकनालालम्बिफलद्वयवदेकशब्दादर्थद्वयप्रतीतेः केवलार्थप्रवणेन विजातीयेनोत्तरवाक्यस्थेन श्लेषेण तिलतण्डुलवत्परस्परनैरपेक्ष्यात्संसृष्टिः । कश्चिच्चमत्कारातिशयमावहतीति काव्यस्य महानुत्कर्षः प्रतिपादित इति रहस्यम् । वृत्तमुपजातिः ॥ ३७ ॥

हे पण्डितो ! मत्सरता त्याग और मर्यादासहित विचार कर कहो कै तो पर्वतहीके नितम्ब सेवन योग्य हैं कि कामदेवकी उमंगसे मुसुकाती विलासिनी स्त्रियोंके नितम्बही सेवने योग्य हैं । नितंब पर्वतके मध्यभाग और स्त्रियोंकी कटिके पश्चाद्भागको कहते हैं ॥ ३७ ॥

**संसारे[1] स्वप्नसारे परिणतितरले द्वे गती पण्डितानां । तत्त्वज्ञानामृतांभः[2]प्लुवललितधियां यातु कालः[3]कथंचित् ॥ नो चेन्मुग्धाङ्गनानां स्तन[4]घनजघनाभोगसंभोगिनीनां । स्थूलोपस्थस्थलीषुस्थगितकरतलस्पर्शलीलो[5]द्यमानाम् ।**

संसार इति ॥ स्वप्नस्य सार इव सारो यस्मिन् स मिथ्याभूत इत्यर्थः । "सप्तम्युपमाने" इत्यादिना बहुव्रीहिः । तथा परिणामावस्थायां तरले अस्थिरे अशाश्वत इत्यर्थः । संसारे संसृतौ पण्डितानां परिज्ञातॄणां द्वे गति अवस्थे विद्येते इति शेषः । के द्वे इत्याशंकायामाह । तत्त्वज्ञानमेव अमृ-

१ संसारेऽस्मिन्नसारे इति पाठान्तरम् । २ प्लुत इति पाठान्तरम् । ३ कदा इति पाठान्तरम् । ४ स्तनजघनभरा इति पाठान्तरम् । ५ लोलोद्यतानाम् इति पाठान्तरम् ।

तांभः अमृतप्रायजलं तत्र प्लव इव ललिता रुचिरा । यद्वा तत्त्वज्ञानामृतांभसि प्लवः प्लवनम् क्रीडेति यावत् । तत्र ललिता उल्लासवती धीर्येषां तत्त्वज्ञानोल्लसितबुद्धिनां सतामित्यर्थः । कथञ्चिदतिप्रयत्नेन कालः यातु गच्छतु अतिक्रामत्वित्यर्थः । " कथमादि तथाप्यन्तर्यत्नगौरवबाढयोः ।"इत्यमरः । कालः कदाचिदित्यपि पाठः । इयमेकावस्था नोचेदवं न स्याच्चेत्तर्हि स्तनयोर्वनजघने विपुलकटिपुरोभागे च । आभोगसंभोगनानां विस्तृतसम्भोगेच्छावतीनाम् । यद्वा स्तनयोर्धनजघनस्य निबिडतरजघनस्य च य आभोगो विस्तारस्तत्र सम्भोगिनीनां कुचमर्दनानिधुवनरूपबाह्याभ्यन्तरसम्भोगाकांक्षिणीनामित्यर्थः । एतेन समानुरागित्वमुक्तम् । अन्यथा आभासप्रसंगात् । तदुक्तम् । "एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा । योषितो बहुसक्तिश्च रसाभासस्त्रिधा मतः ॥" इति । मुग्धांगनानां सुन्दरस्त्रीणां नवयौवनानां वा । "उदयद्यौवना मुग्धा" इति । लक्षणात् । स्थूलोपस्थस्थलीषु वर्तुलोच्छूनमदनसदनप्रदेशेषु । " जानपद० "इत्यादिना अकृत्रिमार्थे ङीप् । स्थगितमाच्छादितं यत्करतलं तस्य स्पर्शः सम्पर्कः स एव लीला तत्र उद्यम उद्योगो येषां तेषां सताम् । कामिनीमोहनोपस्थस्पर्शसुखमनुभवतां सतामित्यर्थः । कालो यातु । इयं चैकावस्था इमे द्वे एवोत्तमे गती न त्वेतद्व्यतिरिक्तं गत्यतरमस्तीत्यर्थः । सर्वदा ज्ञाननिष्ठया वा कामगोष्ठ्या वा पण्डितानां कालो यापयितव्यः । न त्वन्यथेति भाव । स्थूलोपस्थेत्यनेन आसां चित्रिणीजातित्वं सूचितम् । तदुक्त रतिरहस्ये । " मदनसदनमस्या वर्तुलोच्छूनमंतर्मृदु मदनजलाढ्यं रोमभिर्नातिसांद्रैः । प्रकृतिचपलदृष्टिर्बाह्यसम्भोगरक्ता रसयति मधुरालपं चित्रिणी चित्ररक्ता ॥ " इति । एतज्जात्यनुकूलसुरतनियतयामोऽपि तत्रैवोक्तः । " व्रजति रतिसुखार्थं चित्रिणीमग्रयामे भजति दिनरजन्योर्हस्तिनी च द्वितीये । रमयति च तृतीये शंखिनीमार्द्रभावां रमयति रमणीयां पद्मिनी तुर्ययामे ॥ " इति । मतांतरे तु द्वितीययाम इत्युक्तम् । " घनकुचनखभेदैर्मुष्टिघातैश्च मध्ये रतिनियतकरैश्च प्रीतियुक्तैर्वचोभिः । अनृततरकथाभिस्तत्र यामे द्वितीये सुगुणसहितमंतश्चित्रिणीं संलभेत ॥ " इति । स्रग्धरा वृत्तम् ॥ ३८ ॥

यह असार संसार जिसकी अंत अवस्था अति चंचल है उसमें पंडितोंके हेतु दोही सुलभ गति हैं एक तो तत्त्वज्ञानरूपी अमृतरसमें स्नान करनेवाली जिनकी निर्मल बुद्धि है उनका काल अच्छा व्यतीत होता है अथवा सुन्दर कामिनीके पुष्टस्तन और जघनसे भोगमें सुख पाई जो स्त्री उनके शरीरपर हाथ दिये लीलासे उद्योगमें जो तत्पर हैं उनका काल भलीभाँति व्यतीत होता है ॥ ३८ ॥

**आवासः क्रियतां गांगे पापहारिणि वारिणि ॥**
**स्तनद्वये तरुण्या वा मनोहारिणि हारिणि ॥ ३९ ॥**

आवास इति । पापानि हरत्यभाक्ष्णमाति पापहारि । " गांगं वारि मनोहारि मरारिचरणच्युतम् । त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥ पापापहारि दुरितारि तरंगधारि दूरप्रसारि गिरिराजगुहाविहारि । झंकारकारि हरिपादरजोविहारि गांगं पुनातु परितः शुभकारि वारि ॥ " इत्यादिना समस्तपापक्षयकर इत्यर्थः । " बहुलमाभीक्ष्ण्ये " णिनिः । गांगे गंगासम्बन्धिनि । " तस्येदम् " इत्यणप्रत्ययः । वारिणि आवासः क्रियतां स्नानपानादिना बाह्याभ्यंतरशुद्धिसंपादनद्वारा स्वर्गापवर्गप्राप्त्यर्थं तत्र निवासो विधीयतामित्यर्थः । तथा च श्रुतिः । " सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमत्पतन्ति । ये वै तन्वं १ विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजंते ॥" इति । स्मृतिश्च । " गंगा तुंगतरंगिणी भवभयक्लेशापहा सर्वदा मर्त्यानामवगाहनात्सकृदपि स्वर्गेऽपि संस्थापिनी । " इत्यादि । अथवा मनोहारिणि अत्यंतमनोहरे । पूर्ववण्णिनिः । कुतः हारिणि मुक्ताहारवति । अत्र मत्वर्थीय इनिप्रत्ययः । तरुण्या नवयौवनायाः स्तनद्वये आवासः परिशीलनतात्पर्यं क्रियताम् । तरुणीस्तनाश्रयस्यैव निरतिशयसुखावहत्वादिति भावः । अत्र तरुणीग्रहणं स्तनद्वयस्य पतनाभावेन पाटवातिशयद्योतनार्थमन्यथाभासप्रसंगात् । एतेन मणिहिरण्मयकंकणयोरिव स्तनद्वयहारयोरप्यन्योन्यरामणीयकप्रकाशपरिपोषावहत्वेन विशिष्टस्तनद्वयस्याश्रयणयोग्यत्वं सू-

---

१ पापवारिणि इति पाठान्तरम् । २ मध्ये इति पाठान्तरम् ।

चितमित्यवगंतव्यम् । यथाह श्रीहर्षः । " तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् । " इति । अत्र पूर्वोत्तरवाक्यस्थयोरनुप्रासयमकयोः शब्दालंकारयोः संसृष्टिः स्पष्टा ॥ ३९ ॥

पाप हरनेवाला है जल जिसका ऐसी श्रीगंगाजीके तटपर वसे अथवा युवा स्त्रीके उन स्तनोंके मध्यमें वसे जो मनको वशमें कर लेते हैं और जिनपर हार पडा है ॥ ३९ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै- ।
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ॥
अभिनवमदलीलालालसं सुन्दरीणां ।
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ४० ॥

अथ द्वाभ्यां निरामयति--किमिति ॥ इहास्मिन्नर्थे बहुभिरपरिमितैर्युक्तिशून्यैर्निःसारैरुक्तैरुदितैः प्रलापैरनर्थकवचनैः किं फलमिति शेषः । वाचो विज्ञापनं विना न किंचित्फलमस्तीत्यर्थः । " प्रलापोनर्थकं वचः " इत्यमरः । किं त्विहास्मिन् लोके पुरुषाणां द्वयं सर्वदा निरंतरम् । सर्वथेति पाठः । सेवनीयम् किं तद्वयमत आह । अभिनवा नूतना या मदलीला मन्मथावेशजनितविलासास्तासु लालसं लोलुपमत्यासक्तमित्यर्थः । स्तनभरेण कुचकलशभारेण परिखिन्नं परिश्रांतमुभयत्रापि यौवनवतीधर्मो यौवन उपचर्यते । सुन्दरीणां यौवनं वा । न त्वसुन्दरीणामिति भावः । उत वनं पुण्यारण्यं वा सेवनीयमिति सम्बन्धः । एतयोरेव परमसुखनिदानत्वादिति भावः । मालिनी वृत्तम् ॥ ४० ॥

युक्तिशून्य प्रलाप अर्थात् बकवादसे क्या प्रयोजन है ? पुरुषोंको दोही वस्तु सर्वदा सेवने योग्य हैं, नवीन मदांधलीलाके अभिलाषी और स्तनभारसे खिन्न ऐसे सुंदरियोंका यौवन अथवा वन ॥ ४० ॥

---

१ सर्वथा इति पाठान्तरम् ।

सत्यं जना वच्मि न पक्षपाता-।
ल्लोकेषु संतस्वपि तथ्यमेतत् ॥
नान्यन्मनोहारि नितम्बिनीभ्यो।
दुःखैकहेतुर्न च कश्चिदन्यः ॥ ४१ ॥

इदानीं निष्कृष्टमर्थमाह–सत्यामिति ॥ किं बहुना हे जनाः । सत्यं वच्मि यथार्थं ब्रवीमि पक्षपाताद्वैषम्यान्न वच्मि सप्तसु लोकेष्वप्येतदेव सत्यमित्यर्थः। किमेतादित्यत आह। नितंबिनीभ्यस्तरुणीभ्यो मनोहारि मनोहरं वस्तु नास्ति। तथा ताभ्योऽन्य इतरः दुःखानामेकहेतुर्मुख्यकारणं च नास्ति । "को भोगो रमणीं विना" इत्यादिना भोगैकसाधकत्वात् । "बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः।" इत्यनर्थकमूलत्वाच्च नितंबिनीनामेव परमसुखदुःखैकनिदानत्वादिति भावः। अत्र सप्तश्लोक्या पक्षद्वयनिरूपणस्यायमभिप्रायः। अखंडनिरतिशयानन्दावाप्तिलक्षणत्वेनाभ्यर्हितत्वान्मुख्यो मोक्षः पुरुषार्थ इति सकलमतसिद्धान्तः। प्रसूतिभाजो विश्वस्य स्त्रीपुंसाभ्यामेव निष्पन्नत्वात्कामस्य पितृऋणविमोचनहेतुभूततया सततं महापुरुषपरिग्रहात्पुरुषार्थत्वमिति नन्दिकेश्वरश्वेतकेतुपांचालवात्स्यायनादिपूर्वसिद्धांतः । एवं च सति "पूर्वालाभे परः परः" इति न्यायान्मुख्यकल्पालाभेऽनुकल्पस्यापि विहितत्वान्मोक्षपुरुषार्थसाधनप्रवृत्त्यलाभे कामपुरुषार्थसाधनेषु वा अवश्यं प्रवृत्तिः कर्त्तव्येत्यनुसंधायैवमुपन्यस्तमिति। तत्र नितंबिन्यातिरिक्तरम्यवस्त्वनर्थहेत्वोः सत्यपि संबन्धेऽप्यसंबन्धोक्तेऽतिशयोक्तिभेदः । इंद्रवज्रा वृत्तम् ॥ ४१ ॥

हे लोगो ! यह हम सत्य कहते हैं इसमें कुछभी पक्षपात नहीं करते । संसारमें यह विदित है कि, स्त्रियोंसे अन्य मन हरण करनेवाली और दुःखदाई कोईभी वस्तु नहीं है ॥ ४१ ॥

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-।
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ॥

---

१ सर्वेषु च इति पाठांतरम् । २ त्युत्सुकः इति पाठान्तरम् ।

**दृष्ट्वा माद्यंति मोदतेऽभिरमते प्रस्तौति विद्वानपि ।**
**प्रत्याक्षाशुचिभस्त्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ४२॥**

यदुक्तं " दुःखैकहेतुर्न च कश्चिदन्यः " इति तदेव प्रपंचयितुमिदानीं कामिनीगर्हणमारभते । अथ कामिनीगर्हणम् । अथ संभोगनिरूपणानन्तरं कामिनीगर्हणं कमिनीनिंदा आविंशतिसमाप्ति क्रियत इति शेषः । ननु शृंगारालम्बनत्वेन प्रसिद्धानां कामिनीनां गर्हणे शृंगारवर्णनप्रतिज्ञाभङ्गः प्रसज्येतेति चेन्न शिशुपालादिकृतभगवद्गर्हणस्य पुरुषार्थपर्यवसानवत्कामिनीगर्हणस्यापि यथाकथंचिच्छृंगारवर्णन एव पर्यवसानान्न कोऽपि विरोध इति मन्तव्यं तत्प्रकारमेव विवृणोति–कांतेति ॥ वेत्तीति विद्वान् सारासारविचारचतुरः ज्ञानवानपीत्यर्थः । किमुतान्य इति भावः । " विदेः शतुर्वसुः " इति वस्वादेशः । प्रत्यक्षेणाशुचिभस्त्रिकामपवित्रचर्मपुटम् । स्वार्थे कः । " प्रत्ययस्थात्कात्पूर्वस्य० " इत्यादिना इकारादेशः " भस्त्रैषाजाज्ञा० " इत्यादिना वैकल्पिकः । पुत्तिकामिति पाठे अशुचिपांचालिकाम् । अत्यन्तजुगुप्सितस्वरूपामित्यर्थः । तदुक्तम् । " हासोऽस्थिसंदर्शनमक्षियुग्ममत्युज्ज्वलं तत्कलुषावसायाः । स्तनौ च पीनौ पिशितास्रपिंडौ स्थानांतरे किं नरके न योषित् ॥ " इति । इत्थंभूतां स्त्रियम् । " वाम्शसोः " इति विकल्पादियङादेशः । दृष्ट्वा कांता कमनीयेति । " कांतं मनोहरं रुच्यम् " इत्यमरः । उत्पले इन्दीवरे इव लोचने यस्याः सा तथोक्तेति । विपुलश्रोणीभरा पृथुनितम्बबिम्बेति । उन्नमन्तावूर्ध्वमुत्पतन्ताविव स्थितौ कुतः पीनौ पीवरौ उत्तुंगौ उन्नतौ च पयोधरौ स्तनौ यस्याः सा तथोक्तेति । " स्त्रीस्तनाब्दौ पयोधरौ " इत्यमरः । सुमुखांभोजा सुन्दरवदनारविंदेति । शोभने मदनकार्मुकरुचिरे भ्रुवौ यस्याः सा तथोक्तेति च । माद्यति मत्तो भवति, मोदते हृष्यति, अभिरमते क्रीडते । अभिपूर्वाद्रमतेर्लटि तङ् । व्याङ्परिपूर्वस्यैव परस्मैपदित्वनियमात् । प्रस्तौति उक्तप्रकारेण प्रकारांतरेण वा अभिष्टौति । अतो मोहस्याविद्याया दुश्चेष्टितं दुर्विलसितम् । अहो विद्वांसमपीदृगवस्थापन्नं

---

१ मुह्यति इति पाठांतरम् । २ अतिरमते इति पाठान्तरम् । ३ जानन्नपि इति । पाठान्तरम् । ४ पुत्तिकां इति पाठांतरम् ।

करोतीत्याश्चर्यमित्यर्थः । एतत्सर्वं व्यामोहमूलमेव तस्य दुरवच्छेदत्वादिति भावः । यद्यपि " अमेध्यपूर्णे कृमिजन्तुसंकुलं स्वभावदुर्गंधमशौचमध्रुवम् । कलेवरे मूत्रपुरीषभाजने रमेत मूढो न रमेत पण्डितः ॥ " इति वचनात्पंडितस्येत्थं जुगुप्सितकामिनीकलेवरे रमणमेव नास्ति तथापि मोहस्यात्यंतप्राबल्यप्रकटनार्थमित्थमुक्तमित्यवगंतव्यम् । अत्र क्रियाणां बह्वीनां समुच्चितत्वात् क्रियासमुच्चयालंकार एकविषयः । " गुणक्रियायौगपद्यमलङ्कारः समुच्चयः । " इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

**कांता, कमलनयनी, बडे नितम्बवाली, पुष्ट और उत्तुंग ( ऊंचे ) स्तनवाली, सुन्दर कमलमुखी और सुन्दर भौंहवाली यों कह कह पण्डितलोगभी स्तुति करते हैं और देखके मोहित होते हैं, आनन्द पाते, रमण करते और उत्कण्ठित होते हैं, प्रत्यक्षही अपवित्रताकी पुतलीरूप स्त्री है उसपर देखो यह मोहकी क्या खोटी चेष्टा है ॥ ४२ ॥**

**स्मृता भवति तापाय दृष्टा चोन्मादकारिणी ॥**
**स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ४३ ॥**

अथ त्रिभिरानुष्टुभैः स्वरूपं दूषयति–स्मृतेति ॥ या स्मृता सदृशादृष्टचिंतादिस्मृतिबीजोद्बोधकसद्भाववशात्प्रवासे कदाचित्स्मरणविषयीकृता सती तापाय भवतीत्यर्थः ॥ ततो दृष्टा सती उन्मादकारिणी चित्तविभ्रमकरी भवति । स्पृष्टा आलिंगिता सती मोहाय भवति । बहिःप्रपंचविस्मरणकारिणी भवति । अतः सा वधूः कथं नाम कुतो वा दयिता प्रियतमा न कथंचिदपीत्यर्थः । किं तु उक्तबह्वनर्थकहेतुभूतत्वादप्रियतमैवेति भावः । अत्र " स्मृता भवति तापाय " इति पदार्थानां विशेषणगत्या तुरीयपादस्थपदार्थं प्रति हेतुत्वात्काव्यलिंगभेदः ॥ ४३ ॥

**जो स्मरणसे सन्ताप देती है, देखनेसे उन्माद बढाती है अर्थात् मदवाला कर देती है और स्पर्शसे मोहित कर लेती है ऐसी स्त्रियोंको प्रिय क्यों कहते हैं ॥ ४३ ॥**

---

१ वर्धिनी इति पाठान्तरम् ।

**तावदेवामृतमयी यावल्लोचनगोचरा ॥**
**चक्षुष्पंथादतीता तु विषादप्यतिरिच्यते ॥ ४४ ॥**

तावदिति ॥ तावदेव तावत्पर्यंतमेवामृतमयी अमृतोपमाना तद्वन्मधुरतरेत्यर्थः । वधूरिति शेषः । " तत्प्रकृतिवचने मयट् " " टिड्ढाणञ्० " इत्यादिना ङीप् । कियत्पर्यंतमित्यत आह । यावत् यावत्पर्यंतं लोचनगोचरा चक्षुर्विषया भवति तावदिति सम्बन्धः । व्यतिरेके तु नैवमित्याह । चक्षुष्पथात् लोचनमार्गात् । " ऋक्पू० " इत्यादिना समासांतः । अतीता तु अतिक्रांता चेद्विषात्कालकूटादप्यतिरिच्यते अतिरिक्ता भवति । तद्वत्प्राणप्रयासकारिणी भवतीत्यर्थः।अत्र वध्वा अमृतमयत्वविषातिरिच्यमानत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे संबंधरूपातिशयोक्तिः॥४४॥

**स्त्री तभीलौं अमृतमय है जबलौं नेत्रके सामने है । नेत्रसे जब दूर हुई तब विषसेभी अधिक हो जाती है अर्थात् विरहसे सन्ताप देती है ॥ ४४ ॥**

**नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ॥**
**सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ४५ ॥**

उक्तमेवार्थं भंग्यंतरेणाह–नेति ॥ एकां नितम्बिनीमुक्त्वा विहाय अमृतममृतशब्दवाच्यं किंचिद्वस्तु नास्ति विषं विषशब्दवाच्यमपि किंचिन्नास्ति। इयमेवामृतप्राया चेत्यर्थः । कुत एतदित्याशंक्य तत् साधयति । रक्ता अनुरागवती चेत् सैव नितम्बिन्येव अमृतलता सञ्जीवनी भवतीत्यर्थः । विरक्ता अनुरागरहिता चेत् विषवल्लरी विषलतामञ्जरी । " वल्लरी मञ्जरी स्त्रियाम् " इत्यमरः । प्राणापहारिणी भवतीत्यर्थः । अत्र नितम्बिनीव्यतिरेकेणामृतविषयोरस्तित्वसम्बन्धेऽप्यसम्बन्धात्सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः । तथोत्तरार्धे तस्या मोहामृतलतात्वविषवल्लरीत्वरूपणाद्रूपकालङ्कारः । स च रक्तत्वविरक्तपदार्थहेतुककाव्यलिंगोत्थितः सन् पूर्वातिशयोक्तिमुज्जीवयतीति सङ्करः प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलोभाल्लिखंति कवयः । यथा नैषधे

---

१ पथादपगता इति पाठान्तरम् ।

" आदावेव, निपीय " श्लोकद्वयं यथा च " मुखे, प्रसाधितस्य " इत्यादिश्लोकद्वयमित्यादि ॥ ४९ ॥

स्त्रियोंसे परे न कोई अमृत है न विष, यदि वह प्रीति करे तो अमृतकी लता है और प्रीति तोड बैठे तो विषकी मञ्जरी है ॥ ४९ ॥

**आवर्तः संशयानामविनयभुवनं[1] पत्तनं साहसानां।**
**दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ॥**
**स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं ।**
**स्त्रीयंत्रं केन सृष्टं विषममृतमयं प्राणिलोकस्य[2] पाशम् ॥ ४६**

अथ स्त्रीयंत्रस्रष्टारं दूषयति--आवर्त इति ॥ संशयानां सन्देहानामावर्तः परिपाकः सकलसन्देहास्पदीभूतमित्यर्थः । अविनयानां भुवनं लोकः । साहसानां पत्तनम् नगरम् । दोषाणां रागद्वेषादीनां सन्निधानमक्षयनिधिः । कदाचिदप्यत्र दोषा न क्षीयन्त इति भावः । कपटशतमनेककैतवप्रचुरम् । बहुविधकैतवान्यत्रैव प्राचुर्येण वर्तंत इति भावः प्राचुर्ये मयट् । अप्रत्ययानामविश्वासानाम् । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । " इत्यमरः । क्षेत्रमुत्पत्तिभूमिः । अनेकाप्रत्ययोत्पादकमित्यर्थः । स्वर्गद्वारस्य स्वर्गलोकप्राप्तिसाधनस्य विघ्नः प्रतिबन्धः । नरकपुरमुखं यमलोकद्वारं तत्प्रापकमित्यर्थः । "मुखं तु वदने मुख्ये ताम्रे द्वाराभ्युपाययोः । " इति यादवः । सर्वमायाकरण्डमशेषशांबरीविद्येंद्रजालमहेंद्रजालपेटिकेत्यर्थः । अमृतमयं सुधारूपं विषम् । बहिरमृतवत्प्रतीयमानं विचार्यमाणे विषप्रायमित्यर्थः । प्राणिलोकस्य जनसमुदायस्य पाशो बन्धनसाधनं स्त्रीयन्त्रं स्त्रीरूपकीलकं केन सृष्टं निर्मितम् । ईदृगनर्थाशययन्त्रनिर्माणत्वेन अस्य कुत्सितत्वमेवेत्यर्थः । अत एव केनेत्युक्तम् । यद्वा यद्यपि ब्रह्मणैव सृष्टं तथापि ईदृग्दुर्यंत्रनिर्मातृत्वेन तस्य नामोच्चारणमपि कर्तुं न युज्यत इति केनेत्युक्तम्। अत्र स्त्रीयंत्रे पट्टनादिनिरूपणान्निरवयवरूपकालंकारस्तदुक्तम् । "आरोपविषयस्य स्यादतिरोहितरूपिणः। उपरंजकमारोप्यमाणं तद्रूपकं मतम् ॥ " इति । स्रग्धरा वृत्तम् ॥ ४६ ॥

---

१ भवनं इति पाठान्तरम् । २ प्राणीनां मोहपाशः इति पाठान्तरम् ।

संशयोंका भँवर, अविनयका घर, साहसका नगर, दोषोंका पात्र, अविश्वास और सैकडों कपटका खेत, स्वर्गद्वारका विघ्नकारक, नरकनगरका द्वार, मायोंका पेटारा अमृतलपेटा विष और प्राणियोंके फँसानेका फंदा ऐसा स्त्रीरूपी यंत्र किसने वा ब्रह्माने सृजा है ॥४६॥

**नो सत्येन मृगांक एष वदनीभूतो न चेन्दीवरः ।**
**द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ॥**
**किंत्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि ।**
**त्वङ्मांसास्थिमयं वपुर्मृगदृशां मंदो जनः सेवते ॥४७ ॥**

इत्थमनर्थैकतंत्रमपि स्त्रीयन्त्रं कविवाक्प्रपंचवंचितो मूढोऽनुवर्तत इत्याह– नो इति॥ एष परिदृश्यमानो मृगांकश्चंद्रः सत्येन यथार्थेन अवदनं वदनो संपद्यमानो वदनीभूतः वदनत्वेन परिणत इत्यर्थः । नो न भवतीति शेषः । अभूततद्भावे च्विः " ऊर्यादिच्विडाचश्च " इति गतिसंज्ञायां " कुगतिप्रादयः " इति समासः । तथा इंदीवरद्वन्द्वं नीलोत्पलयुगुलम् । " द्वन्द्वं रहस्य० " इत्यादिना निपातः । लोचनतां लोचनभावं च न गतम् । "तस्य भावस्त्वतलौ " इति तलप्रत्ययः । तथा कनकैः सुवर्णदलैः यथा चांपेयप्रसूनैरित्यर्थः । " कापि चांपेयगौरी " इति पद्मिनीस्वरूपनिरूपणात् । " अथ चांपेयश्चंपको हेमपुष्पकः " इत्यमरः । "पुष्पमूलेषु बहुलम् " इति लुक् । अंगयष्टिर्गात्रयष्टिरपि न कृता न निर्मिता । किं त्वेवमुक्तप्रकारेण वदनं चंद्र इत्याद्याकारेणेत्यर्थः । कविभिः प्रगल्भवचनैः कवीश्वरैः प्रतारितमना वंचितचित्तः विमोहितः सन्निति यावत् मंदो मूढो जनस्तत्त्वं जानन्नपि न त्विदं चन्द्रः किन्तु तत्साम्येन तथा व्यपदिश्यत इति विदन्नपीत्यर्थः त्वङ्मांसास्थिमयमत्यन्तगुजुगुप्सितमपीत्यर्थः। मृगदृशां स्त्रीणां वपुः कलेवरं सेवते संभोगार्थमाश्रयते । विद्वांस्तु नैवमिति भावः । अत्र प्रसारितमनःपदार्थस्य विशेषणगत्या जुगुप्सितवपुराश्रयणपदार्थे प्रति हेतुत्वात्काव्यलिंगभेदः । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

---

१ सत्यत्वेन शशांक इति पाठान्तरम् । २ किंत्वेकं इति पाठान्तरम् ।

देखो तौ सच चन्द्रमाही मुख नहीं बन गया, कमलही दोना नेत्र नहीं हुए, स्वर्णहीसे देह नहीं बना है यह स्त्रियोंका शरीर चाम, मांस और हाडमय है परन्तु यह बात जानकरभी कवियोंके बहकानेसे अन्धे अर्थात् विवेकरहित मनुष्य उसे सेवन करते हैं ॥ ४७ ॥

लीलावतीनां सहजा विलासा- ।
स्त एव मूढस्य हृदि स्फुरन्ति ॥
रागो नलिन्या हि निसर्गसिद्ध- ।
स्तत्र भ्रमत्येव वृथा षडंघ्रिः ॥ ४८ ॥

अथ पुरुषाणां भ्रांतिं सदृष्टांतमाह—लीलावतीनामिति ॥ लीलावतीनां विलासिनीनामतः विलासाः विभ्रमाः सहजा नैसर्गिका अत एव ते विलासा मूढस्याज्ञस्य हृदि स्फुरन्ति । आत्मगोचरा इमे विलासा इति बुद्ध्या सर्वदा हृदये विस्फुरिता भवंतीत्यर्थः । एतच्च वृथैवेति भावः । तथा हि नलिन्याः रागो रक्तिमा अनुरागश्च निसर्गसिद्धः किंतु षडंघ्रिः षट्पदः विटश्च ध्वन्यते । वृथा व्यर्थमेव तत्र नलिन्यां भ्रमति रागोऽयं मद्गोचर इति भ्रांत्या पर्यटति वस्तुतस्तु न तथा अतो व्यर्थमस्य भ्रमणमिति भावः । अत्र वाक्यद्वयेऽपि बिंबप्रतिबिंबभावेन साम्यनिर्देशाद्दृष्टांतालंकारः । "यत्र वाक्यद्वये बिंबप्रतिबिंबतयोच्यते । सामान्यधर्मो वाक्यज्ञैः स दृष्टांतो निगद्यते ॥" इति लक्षणात् । अयं च रागयोर्द्वयोर्भेदेऽपि श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिनिर्व्यूढभ्रांतिमदुज्जीवितया प्रस्तुतनलिनीषट्पदविशेषणसाम्यादप्रस्तुतकामिनीविटप्रतीतिगोचरसमासोक्त्यांगेन संकीर्यते । वृत्तमुपजातिः ॥ ४८ ॥

लीलावती स्त्रियोंका लीला करना सहजस्वभाव है सोई मूढोंके हृदयमें वशीकरण हो लगता है। जैसे कमलिनीमें ललाई स्वाभाविक होती है भ्रमर उसपर व्यर्थही आसक्त होकर घूमता है अर्थात वह समझता है कि मेरेही लिये ललाई चमकाय रही है ॥ ४८ ॥

१ मदा इति पाठांतरम् ।

संमोहयन्ति मदयन्ति विडम्बयन्ति ।
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ॥
एताः प्रविश्य सदयं हृदयं नराणां ।
किं नाम वामनयना न समाचरन्ति ॥ ४९ ॥

संमोहयंतीति ॥ एता वामानि सुन्दराणि नयनानि यासां ताः वामनयनाः नराणां पुरुषाणां सदयं दयायुक्तं हृदयं प्रविश्य संमोहयन्ति मोहमुत्पादयन्ति, मदयन्ति, विडंबयन्ति, निर्भर्त्सयन्ति, परं च रमयन्ति विषादयन्ति विषादमुत्पादयन्ति तस्मात् एताः स्त्रियः किं नाम न समाचरन्ति अपि तु सर्वमेव आचरन्ति ॥ ४९ ॥

मोह लेती, मत्त कर देती, विडंबना करती, डांट झिडकन देती, रमण कराती और विरहका विषाद देती है । ऐसी स्त्रियां मनुष्यके सदय हृदयमें प्रवेश करके क्या नहीं करती हैं ॥ ४९ ॥

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिपरं[1] ।
मुखाब्जं तन्वंग्याः किल वसति यत्राधरमधु[2] ॥
इदं तत्[3]किंपाकद्रुमफलमिदानीमतिरसं[4] ।
व्यतीतेऽस्मिन्काले विषमिव भविष्यत्यसुखदम् ५० ॥

अथापातरमणीयरमणीमुखावलोकनेन न विमोहितव्यमित्याह--यदीति ॥ यदेतद्वर्णनीयं तन्वंग्यास्तरुण्याः मुखमब्जमिव मुखाब्जं वक्त्रपद्मं कर्तृ पूर्णेंदोः पूर्णचन्द्रस्य द्युतिहरं कांतिचोरकं तत्कल्पमित्यर्थः। अब्जस्य पूर्णे दुद्युतिहरत्वं विरुद्धमिति ध्वनिः। तथा परमत्यंतमुदारा रम्या आकृतिराकारो यस्य तत्तथोक्तम् । किं च यत्र मुखाब्जं अधरमधरोष्ठसंबांधि मधु मकरंदः अमृतं वा वसति अस्ति किल । किलेति वार्तायाम् । न तु कदाप्यनुभूतामित्यर्थः । प्रसिद्धाब्जे तु मकरन्दो वर्त्तते मुखाब्जे तु वार्त्तामात्रमेव न तु वस्तुतस्तु तद-

१ वरं, धरम् इति पाठांतरम् । २ तत्र इति पाठान्तरम् । ३ तावत् इति पाठांतरम् । ४ मिवातीत्र विरसं इति पाठान्तरम् ।

स्तीति भावः । तदिदं वक्त्रपद्ममिदानीमस्मिन् समये प्रारंभकाल इत्यर्थः । अतिरसमतिशायितमाधुर्यगुणयुक्तं रुचिरतरमिति यावत् । किमप्यानिर्वाच्यमित्यर्थः । पाकद्रुमस्य बालरसालादिवृक्षस्य फलमतिरसबालवृक्षफलं नैवेत्येतान्निर्देशः । " पोतः पाकोऽर्भको डिंभः " इत्यमरः । यद्वा पाकद्रुमफलं पचेलिमवृक्षविशेषफलमित्यर्थः । तथाभूतस्यैवात्यन्तरसवत्त्वादिति भावः । यद्वा किंपाकमीषत्पक्कं द्रुमफलं तथाभूतस्यैव रुचिविशेषास्पदत्वादिति भावः । अथवा किंपाकाख्यो द्रुमः यस्य फलमापातमधुरं परिणामविषमं च तस्य किंपाकद्रुमस्य फलं तत्कल्पमित्यर्थः । किंपाकशब्दो निघंटुतरेषु मृग्यः । तस्य रसालादिवृक्षविशेषवाचकत्वं तु कविरेव प्रमाणम् । अस्मिन् प्रवर्तमाने काले व्यतीते अतिक्रांते साति विषमिव गरलमिव असुखदं स्वलावण्यदर्शनजानितसंमोहेन विवेकभ्रंशे विहिताकरणात्प्रत्यवाये वात्यन्तदुःखप्रदमित्यर्थः । भविष्यति । तथा च कालांतरेऽवश्यं दुःखजनकत्वात्तादात्मिकसुखलोभेन तरुणीवदनपद्मं न विश्वसनीयमिति भावः । किंपाकशब्दस्य " विषमुष्टौ निरर्थके च " इति शब्दरत्नकोशे वर्तते तस्मात् रसालादिवृक्षांतःपातित्वं न संभवतीति मन्तव्यम् । शिखरिणी वृत्तम् ॥ ९० ॥

पूर्णमासीके चन्द्रमाकी छबि हरनहार अत्यन्त सुन्दर आकारवाली स्त्रियोंका मुखकमल जिसमें अधरामृत रहता है वह अज्ञात वा युवा अवस्थामें अच्छा लगता है फिर वह काल व्यतीत होनेपर ज्ञात वा वृद्धापन प्राप्त होनेसे मदारके फलके समान विषसा बुरा लगेगा ॥ ९० ॥

**उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन- ।**
**द्वन्द्वेनोद्गत[1]चक्रवाकयुगला[2] वक्राम्बुजोद्भासिनी ॥**
**कान्ताकारधरा नदीयमभितः क्रूरात्र[3] नापेक्षते ।**
**संसारार्णवमज्जनं यदि तदा[4] दूरेण संत्यज्यताम् ॥९१॥**

---

१ नोद्यत इति पाठान्तरम् । २ मिथुना इति पाठान्तरम् । ३ क्रूराशया नेष्यते इति पाठांतरम् । ४ ततो इति पाठांतरम् ।

अथास्या अनर्थहेतुभूतनदीत्वनिरूपणेन परित्याज्यतामाह–उन्मीलदिति ॥ तिस्रश्च ताः वल्यश्च त्रिवल्य इति द्विगुसमासः । यथाह वामनः । त्रिवलीशब्दसंज्ञा च इति सूत्रेण सप्तर्षय इतिवत् “ दिक्संख्ये संज्ञायाम् ” इति संज्ञायां द्विगुः इति । उन्मीलंत्य उत्पद्यमानास्त्रिवल्यो वलित्रयमेव तरंगाः । यद्वा त्रित्वसंख्यावल्यस्त्रिवल्यः । उत्तरपदलोपिसमासः ।. ता एव तरंगाः ऊर्मयस्तेषां निलया । प्रोत्तुंगावत्युन्नतौ पीनौ पीवरौ च यौ स्तनौ तयोर्द्वंद्वेन युगलेन हेतुना उद्गतमुच्चलच्चक्रवाकयुगलं चक्रवाकाख्यपक्षिविशेषयुग्मं यस्याः । स्तनरूपचक्रवाकयुगलेत्यर्थः । वक्त्रमेवांबुजं तेनोद्भासते अभीक्ष्णमिति तदुद्भासिनी । “ बहुलमाभीक्ष्ण्ये ” इति णिनिः । अभितः समंतात् क्रूरा कुटिलहृदया । नदीपक्षे क्रूरा वक्रगतिप्रवाहा अथवा अभितः सर्वतः प्रवर्तमानाः क्रूरा नक्रादिक्रूरजंतवो यस्याः सा । कांताकारधरा कांतारूपधारिणी इयं परिदृश्यमाना नदी कर्म । अत्रास्मिन् लोके संसार एवार्णव तत्र मज्जनं नापेक्षते नाभिलष्यते यदि तदा अनपेक्षापक्षे दूरेण संत्यज्यतां दूरतर एव विसृज्यताम् । “ दूरान्तिकार्थेभ्यो द्वितीया च ” इति विकल्पात्तृतीया । अन्यथा तत्समाश्रयेण अर्णवमज्जनमेव सिद्धं स्यादिति भावः । अत्र समस्तवस्तुवर्तिसावयवरूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

शोभित पेटकी त्रिवलीही तरंगका समूह है, उत्तुंग और पुष्ट दोना स्तनहा उसमें चक्रवाकके जोडे हैं, जिसका गंभीर आशय मुखरूपी कमलसे शोभित है ऐसी स्त्रीका आकार धारण किये नदी है सो हे पुरुषो ! जो तुम संसारसमुद्रमें न मग्न हुआ चाहो तो इसे दूरहीसे परित्याग करो । इसका यह तात्पर्य है कि नदीमें गिरी वस्तु घूम फिरके समुद्रमें जा पडती है ॥ ५१ ॥

**जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ॥**
**हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम्॥५२॥**

इतोऽपि न विश्वासार्हाः स्त्रिय इत्याह द्वाभ्याम्–जल्पंतीति ॥ अन्येन सार्धमेकेन पुरुषेण सह जल्पंति संल्पंति । सविभ्रमाः सविलासाः सत्यः

अन्यं पुरुषं पश्यंति । हृद्गतं हृदयस्थमन्यं चिंतयंति अतो याषतां स्त्रीणां प्रियतमः नियत इति शेषः । को नाम न कोऽपीत्यर्थः ॥ ९२ ॥

बातें तो किसी अन्य पुरुषसे करती हैं और विलाससहित औरहीकी ओर देखती हैं और हृदयमें औरहीसे मिलनेकी चाह रखती हैं, फिर कहो तो इनमेंसे कौन स्त्रियोंको प्यारा है सो नहीं जान पडता ॥ ९२ ॥

**अपसर सखे दूरादस्मात्कटाक्षविषानला- ।**
**त्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ॥**
**इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै- ।**
**श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ९३॥**

अथ योषितः सर्पस्वरूपेण सखायं भीषयन् दूरादपसर्पणमुपादिशति- अपसरेति ॥ हे सखे बन्धो, कटाक्षा अपांगवीक्षणान्येव विषानला विषाग्निज्वाला यस्य तस्मात् । प्रकृत्या स्वभावत एव कुटिलात् । "प्रकृत्यादिभ्यस्तृतीया च" इति तृतीयासमासः । विलासा विभ्रमा एव फणाः स्फटास्ता बिभर्तीति तथोक्तात् । "स्फटायां तु फणा द्वयोः" इत्यमरः । तस्मात् योषित्सर्पात् कामिनीरूपव्यालाद्दूरादपसर दूरं गच्छ । योषित्सपसमागमं मा कुर्वित्यर्थः । अन्यथा तत्समागमेन दंशनप्रसंगे चिकित्साया दुष्करत्वादिति भावः । "दूरांतिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी । तदेव प्रकटयति । इतरेति । इतरफाणिना प्रसिद्धसर्पेण दष्टः पुमान् औषधैः मूलिकामणिमंत्रादिभिरित्यर्थः । चिकित्सितुं विषावरोपणेनोज्जीवयितुं शक्यः । चतुरवनिताभोगिना निपुणतरुणीसर्पेण ग्रस्तं दष्टं समाक्रांतं च पुरुषं तु मन्त्रिणो मांत्रिका विषवैद्यास्त्यजन्ति हि । तद्ग्रासजनितोन्मादस्य दुरवरोपणत्वादिति भावः । अत्रापि समस्तवस्तुवर्तिसावयवरूपकालंकारः । तेन चोपमानात्प्रसिद्धसर्पादुपमेयस्य योषित्सर्पस्याधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलङ्कारेणालंकारध्वनिः । हरिणी वृत्तम् ॥ ९३ ॥

१ शिखा० इति पाठान्तरम् ।

हे मित्र ! सहजही क्रूर और विलासरूपी विषाग्निसे दूर भाग क्योंकि अन्य सर्पोंका डसा हुआ औषधीसे अच्छा हो सक्ता है पर चतुरस्त्रीरूपी सर्पके डसे हुएको मन्त्रतन्त्रवालेभी छोड भागते हैं ॥ ९३ ॥

विस्तारितं मकरकेतनधीवरेण ।
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ॥
येनाचिरात्तदधरामिषलोलमर्त्य- ।
मत्स्यान् विकृष्य विपचत्यनुरागवह्नौ ॥ ९४॥

पुनः प्रकारांतरेण भीषयति–विस्तारितामिति ॥ मकरकेतनो मदन एवं धीवरः कैवर्तस्तेन कर्त्रा । "कैवर्त दाशधीवरौ" इत्यमरः । अत्रास्मिन् भवांबुराशौ संसारसागरे स्त्रीसंज्ञास्य संजाता स्त्रीसंज्ञं योषिद्रूपमित्यर्थः । तारकादित्वादितच् । बडिशं मत्स्यवेधनं मत्स्यगलग्राहकसामिषवक्रायोयंत्रमित्यर्थः । "बडिशं मत्स्यवेधनम्" इत्यमरः । विस्तारितं प्रवर्तितम् । येन स्त्रीबडिशेन तस्य स्त्रीबडिशस्याधरमेवामिषं मांसखण्डं तत्र लोला सतृष्णा ये मर्त्या मनुजास्त एव मत्स्या मीनास्तानचिराद्विकृष्याकृष्याननुराग एव वह्निस्तत्र विपचति विशेषेण पक्वान् करोति अत्यन्तं सन्तापयतीत्यर्थः । मन्मथधीवर एवेति शेषः । सोऽप्येतद्वारैव मनुजान् परिपीडयतीति भावः । अत्रापि पूर्ववद्रूपकालंकारः । वसन्ततिलका वृत्तम् ॥ ९४ ॥

इस संसाररूपी समुद्रमें कामदेवरूपी केवटने स्त्रीरूपी जालको इसलिये फैलाया है कि वह कामदेव मनुष्यरूपी मच्छ उसके अधरमांसके जो लोभी हैं इन्हें वशमें कर अनुरागरूपी अग्निमें पकाता है ॥ ९४ ॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ॥
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ९५ ॥

---

१ पचतीत्यनु इति पाठान्तरम् ।

अथ मानसं भीषयति–कामिनीति ॥ पन्थानं गच्छति नित्यामिति पांथो नित्यपाथिकः । " पन्थो ण नित्यम् " इति णप्रत्ययः पन्थादेशश्च । मन एव पांथस्तस्य संबुद्धिः हे मनःपांथ । कुचावेव पर्वतौ ताभ्यां दुर्गमे गन्तुमशक्ये कामिन्याः कायो देहः स एव कांतारमरण्यं तत्र मा संचर संचारं मा कुरु । न प्रवर्तस्वेत्यर्थः । कुतस्तत्र कांतारे स्मर एव तस्करः चोरः आस्ते वर्तते । स च मानसर्वस्वमपहरिष्यतीति भावः । " चोरैकागारिकस्तेनदस्युतस्करमोषकाः ।" इत्यमरः । "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च " इति सुडागमतलोपौ । अलंकारस्तु पूर्ववत् ॥ ९९ ॥

स्त्रियोंका शरीररूपी वन जो कुचरूपी पर्वतोंसे अतिदुर्गम हो रहा है उसमें हे बटोही मन ! तू मत जा, तहां कामदेवरूपी चोर रहता है ॥ ९९ ॥

**व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना ।**
**नीलाब्जद्युतिनाहिना परमहं दष्टो न तच्चक्षुषा ॥**
**दष्टे: संति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो ।**
**मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम्९६॥**

अथ त्रिभिः कस्यचिदनुभवमालक्ष्याह–व्यादीर्घेणेति ॥ व्यादीर्घेण अत्यायतेन अन्यत्र कर्णांताविश्रांतेन।चलेन चञ्चलप्रकृतिना वक्रगतिना निसर्गकुटिलसञ्चारेण । समानमेतद्विशेषणद्वयम् । तेजस्विना बलवता अत्युज्ज्वलेन च प्रशंसायामिनिः । भोगिना फणवता । " भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः । इत्यमरः । अन्यत्राभोगिनेति च्छेदः । विशालेनेत्यर्थः । नीलाब्जस्य नीलोत्पलस्य द्युतिरिव द्युतिर्यस्य तेन एकत्र तद्वर्णेन अन्यत्र तत्सदृशेनेत्यर्थः । अहिना सर्पेण परमत्यन्तमहं दष्टः । किंतु तच्चक्षुषा तस्याः कामिन्याः चक्षुषा उक्तविशेषणेन न दष्ट इत्यर्थः । चिकित्सकाः वैद्या धर्मार्थिनः परोपकार एव प्रयोजनमेषामस्ति तथाभूताः सन्तः दिशि दिशि प्रतिदिशम् । नित्यवीप्सायां द्विर्भावः । प्रायेण भूम्ना सन्ति सर्वत्र सन्तीत्यर्थः ।

१ वर० इति पाठान्तरम् । २ दष्टे इति पाठान्तरम् । ३ विक्षतस्य इति पाठान्तरम् ॥

किंतु मुग्धायाः मुग्धांगनायाः यदक्षि यद्वा मुग्धाक्षि सुन्दरावलोकनं तेन सर्परूपेण क्षयं क्षणमात्रं वीक्षितस्य दृष्टस्य ग्रस्तस्येत्यर्थः । विक्षतस्येति पाठे दुष्टस्येत्यर्थः । मे मम तु वैद्यो न हि चिकित्सको नास्ति हि औषधं विषहरभेषजमपि च नास्तीत्यर्थः । अतो महामोहार्णवनिमज्जनमेव न तु तत्पारगमनामिति भावः । अत्र प्रसिद्धाह्यपेक्षया चक्षूरूपाहेराधिक्यकथनाद्व्यतिरेकालंकारः । " उपमानाद्यदन्यस्य व्यतिरेकः स एव सः । " इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

बडा लम्बा चञ्चल टेढी चालवाला और तेजवाला फनधारी नीलकमलसा काला सर्प जो मनुष्यको काट ले तो अच्छा, परन्तु स्त्रीके कटाक्षका काटा अच्छा नहीं क्योंकि सांपके डसेको बचानेवाले सब देशमें बसते हैं प्रायः धर्मार्थी भी होते हैं पर अच्छे नेत्रवाली स्त्रीकी दृष्टिसे काटे हुएको न कोई मन्त्र है न औषधी है ॥ ५६ ॥

**इह हि मधुरगीतं नृत्यमेतद्रसोऽयं ।**
**स्फुरति परिमलोऽसौ स्पर्श एषःस्तनानाम् ॥**
**इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणः ।**
**स्वहितकरणधूर्तैःपञ्चभिर्वञ्चितोऽस्मि ॥ ५७ ॥**

इहेति ॥ इह हि तरुणीष्वेवेत्यर्थः । हिरत्रावधारणार्थकः । " हिर्हेतावबधारणे " इत्यमरः । मधुरं संतापहरं श्रोत्रसुखावहमित्यर्थः । " शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् । " इति वचनात् । तद्गीतं गानं स्फुरति, एतन्नयनानन्दकरं नृत्तं नाट्यं स्फुरति अयं रसनेन्द्रियस्वादातिशयप्रदो रसः अधरामृतं स्फुरति, असौ घ्राणतर्पणः परिमलः पद्मिनीजातिनिमित्तगन्धविशेषः घनसारगन्धसारादिलेपनप्रयुक्तामोदविशेषो वा स्फुरति एष त्वगिंद्रियसौख्यावहः स्तनानां स्पर्शः स्फुरति । " स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण " इति वामनसूत्रे प्रायग्रहणाद्बहुवचनप्रयोगः । इत्येवं प्रकारेण हतो विनष्टः परमार्थस्तत्त्वार्थो येषां तैर्विषय-

---

१ स्वहितकरणदक्षै इति पाठान्तरम् ।

परतंत्रैरित्यर्थः। अत एव स्वाहितकरणे धूर्तैः कितवैः आत्माहिताचरणतत्परैरिव स्थितैरित्यर्थः। पञ्चभिरिंद्रियैः श्रोत्रादिभिर्भ्राम्यमाणस्तत्तद्विषयेष्वासज्यमानः सन् वाञ्चितः प्रतारितोऽस्मि। न चैतत्कैतवं प्रागेवाज्ञासिषमित्यर्थः। मालिनी वृत्तम् ॥ ९७ ॥

यह कैसा सुन्दर मधुर गीत है, रूप देखो कैसा अच्छा है, इस वस्तुका रस कैसा स्वादिष्ट है, इस वस्तुकी कैसी अच्छी सुगंध है, स्त्रीके स्तनोंका स्पर्श क्या अच्छा सुख देता है इस भांति परलोकको नष्ट करनेवाली और अपने प्रयोजन साधनेमें अतिधूर्त्त है उन पांचों ज्ञानेंद्रियोंसे हे नर! तू हेर फेर कर ठगा गया ॥ ९७ ॥

**न गम्यो मन्त्राणां न च भवति भैषज्यविषयो।**
**न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः॥**
**भ्रमावेशादंगे कमपि[1] विदधद्भंगमसकृ- ।**
**त्स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥९८॥**

अथांगनाव्यामोहजनकं मन्मथं दूषयति-नेति॥ मंत्राणां गम्यो मंत्रसाध्यो न भवति। भैषज्यविषयः औषधाद्यपनेयश्च न भवति। भेषजमेव भैषज्यमिति विग्रहः। स्वार्थे ष्यञ्प्रत्ययः। "भेषजौषधभैषज्यानि" इत्यमरः। तथा विविधैर्नानाप्रकारैः शांतिकशतैरनेकशांतिकर्मभिः प्रध्वंसं विनाशं चापि न व्रजाति न गच्छाति। "पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते। तच्छांतिरौषधैर्दानैर्जपहोमार्चनादिभिः॥" इति स्मरणात्। प्रसिद्धैस्तु जपादिभिः शाम्यति न त्वयमिति भावः। किंतु भ्रमावेशान्मोहोत्पादनात् अंगे शरीरे कमप्यनिर्वाच्यं भंगं जाड्यम्। यद्वा भ्रमावेशान्मतिभ्रंशापादनात् अंगे करचरणाद्यवयवेष्वित्यर्थः। कमपि भंगं विक्षेपादिविकारमसकृद्बहुवारं विदधत्कुर्वन्। दधातेर्विपूर्वाच्छतृप्रत्ययः। "नाभ्यस्ताच्छतुः" इति नुमभावः। स्मरापस्मारः स्मरप्रयुक्तांगनाव्यामोहरूपापस्माररोगो दृशं मदीयदृष्टिं भ्रमयति व्यत्यासयाति। तस्मिन् तज्ज्ञानं करो-

१ किमपि इति पाठान्तरम्। २ भव्यमसमं इति पाठान्तरम्।

तीत्यर्थः । तथा घूर्णयाति चक्रवत् भ्रामयति च । किमत्र करोमि कथमयं चिकित्स्य इति भावः । यथाहुर्नैदानिकाः " क्रुद्धैर्धातुभिराहते च मनसि प्राणी तमः संविशन् दन्तान् खादति फेनमुद्वमति दोःपादौ क्षिपन् मूढधीः । पश्यन् रूपमसत्क्षितौ निपतति प्रायः करोति क्रिया बीभत्स्याः स्वयमेव शाम्यति गते वेगे त्वपस्माररुक् ॥ " अत एव व्यतिरेकालंकारः लक्षणं तूक्तम् । शिखरिणी वृत्तम् ॥ ९८ ॥

यह कामदेवरूपी अपस्मार ( मृगी ) रोग भ्रमके आवेशसे बडा दुःखदाई शरीरको तोडता और मनको भ्रमाता नेत्रोंको घुमाता है और इस रोगमें मंत्रोंकी गति नहीं, औषधीभी नहीं काम करती, अनेक प्रकारकी शांति अर्थात् पाठ पूजादिसेभी नाश नहीं होता ॥ ९८ ॥

**जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलांगायच ।**
**ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ॥**
**यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया ।**
**पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥९९ ॥**

अथ त्रिभिः पण्यांगनागर्हणं कुर्वन्निगमयति–जात्यंधायेति ॥ जात्यंधाय जन्मप्रभृत्यवसन्नदृशे पुरुषाय च दुष्कुलाय च दुर्मुखाय मुखराय बहुगर्ह्यभाषणदूषितवदनायेत्यर्थः । " दुर्मुखे मुखराबद्धमुखौ " इत्यमरः । यद्वा दुष्टं व्याध्यादिना जुगुप्सितं दुर्गंधयुक्तं वा मुखं यस्य तस्मै । जरया विस्रंसया जीर्णानि शिथिलानि कृशानि विश्लथसंधिबन्धानि च अखिलाङ्गानि करचरणाद्यशेषावयवा यस्य तस्मै च ग्रामीणाय ग्रामांतरादागताय अज्ञातकुलगोत्राय पांथाय चेत्यर्थः । किंबहुना गलत् स्रंसमानं कुष्ठं कुष्ठजनितपूयरक्तादि तेनाभिभूताय गर्हिताय च लक्ष्मीलवश्रद्धया संपल्लेशप्राप्त्याशया मनोहरमतिसुन्दरं निजवपुः स्वशरीरं यच्छंतीष्वर्पयंतीषु चुम्बनाश्लेषणदन्तनखव्रणादिसंभोगार्थं तदधीनं कुर्वतीष्वित्यर्थः । ददातेः " दाण् दाने " इत्यस्माद्धातोः शतरि " उगितश्च " इति ङीप् । " पाघ्राध्मा० " इत्यादिना दाणो यच्छा

देशः । तथा विवेकः कर्तव्याकर्तव्यविचारः स एव कल्पलतिका तस्याः शस्त्रीषु छुरिकासु विवेकविच्छेदकरीष्वित्यर्थः। विवेकस्याप्यखिलार्थसंघटकत्वात्कल्पलतिकारूपणमवगन्तव्यम् । " स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका । " इत्यमरः । " बह्वादिभ्यश्च " इति ङीप् । पण्यस्त्रीषु । वेश्यांगनासु कः पुमान् विवेकरहितोऽपीत्यर्थः। रज्येतानुरक्तो भवेन्न कोऽपीत्यर्थः। " वारस्त्री गणिका वेश्या सुलावण्यांगनापि च " इति वैजयन्ती । शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

**जन्मांध, कुरूप, वृद्धापनसे शिथिलांग, गँवार, नीचजाति और टपकते कोठसे भरे पुरुषोंकोभी अपना सुंदर देह थोडे धनकी आशासे समर्पण करती है ऐसी वेश्या विवेकरूपी कल्पलताकी छुरीसी है उससे कौन बुद्धिमान् रमे ॥ ५९ ॥**

**वेश्यासौ मदनज्वाला रूपेन्धनविवर्धिता ॥**
**कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ६० ॥**

वेश्येति ॥ असौ वेश्या रूपं सौंदर्यमेवेंधनानि तैः समिद्भिर्विवर्धिता प्रवर्धिता मन्मथज्वाला मन्मथाग्निज्वाला " इन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् । " इत्यमरः । यत्र मदनज्वालारूपवेश्यायां कामिभिः कामुकैः यौवनानि नूतनवयांसि । युवादित्वादण्प्रत्ययः । धनानि च हूयंते हव्यरूपेण तत्सात्क्रियन्ते विलुप्यन्त इत्यर्थः। स्वर्गादिफलकांक्षिभिराहवनीयाग्निज्वालायां हवींषि वेति भावः । अत्र वेश्यायामारोप्यमाणस्य ज्वालात्वस्य प्रकृतहवनोपयोगित्वात्परिणामालंकारः " आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः " इति लक्षणात् । स च रूपेंधनेति रूपकेण संकीर्यते । रूपकत्वारोपणस्योपरंजकमात्रमेवेति विवेकः ॥ ६० ॥

**वेश्या तो कामाग्निकी ज्वाला है, रूपरूपी इन्धनसे प्रचण्ड है कामी पुरुष उसीमें अपना मन और यौवन होम करते हैं ॥ ६० ॥**

**कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ॥**
**चारभटचोरचेटकविटनटनिष्ठीवनशरावम् ॥ ६१ ॥**

१ समेधिता इति पाठान्तरम् ।

क इति ॥ मनोज्ञं सुन्दरमपि वेश्याया अधरः पल्लवमिवेत्युपमितसमासो न त्वधरः पल्लवमिति रूपकम् । रूपके तूत्तरपदप्राधान्येन तत्र चुम्बनायोगात् । कः कुलपुरुषः सत्कुलसम्भवः पुमान् जातिनीतिकुलाचारधर्मज्ञ इत्यर्थः । चुम्बति न कोऽपीत्यर्थः । कुत एतदित्याशंकायामचुम्बनहेतुभूतं विशेषणमाह । चारा गूढपुरुषाः, भटा योधाः, चोरास्तस्कराः, चेटकाः स्त्रीपुरुषसन्धानकुशलाः दौतकर्मनिरताः, विटा जाराः, नटा भूमिकाधारास्तेषां पुरुषापसदानां निष्ठीवनशरावमुच्छिष्टपात्रं परमापवित्रमित्यर्थः । चुम्बनसमये तदुच्छिष्टस्य तत्र संक्रमणादिति भावः । अत्र यद्यपि " रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम् । " इति स्मरणात्सुरतसमये पवित्रमेव स्त्रीमुखं तथाप्युक्तरीत्या कश्मलसंपर्कात् हेयतया चुम्बनानर्हत्वान्न चुम्बनीयामिति तात्पर्यम् " शरावो वर्धमानकः " । इत्यमरः । अत्र रूपकोपमानुप्रासानां संसृष्टिः ॥ ६१ ॥

वेश्याका अधरपल्लव यदि सुन्दर है तौभी उसे कौन कुलीन पुरुष चुंबे क्योंकि ठग, ठाकुर, चोर, नीच, नट इत्यादि और जारोंके थूकनेका ठीकरा है ॥ ६१ ॥

**मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ॥**
**अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते॥६२॥**

स्त्रियो बाह्यमधुराः अन्तर्विषा अतः सर्वथा त्याज्या एव न तु ग्राह्या इत्याभिप्रायेणेत्याह–मध्विति ॥ योषितां स्त्रीणां वाचि मधु ौद्रं तिष्ठति हृदि हृदये केवलं प्राधान्येन हालाहलमेव कालकूटविषमेव अत एव अस्मात् कारणादेव अधरः अधरोष्ठः निपीयते । अत्र मधु वर्तते इति मत्वैव सर्वजनैरादृत्य नितरां पीयते । हृदयं मुष्टिभिस्ताड्यते । अत्र विषं वर्तत इति मत्वैव सर्वजनैस्ताडनं क्रियते । अतः स्त्रियः स्ववचनेषु केवलमधुधारास्राविण्यः हृदये विषतुल्याभिप्रायवत्यश्च इति पूर्वार्धे प्रदर्शितमुत्तरार्धे तु प्रथमपादे मधुग्रहणं च द्वितीयपादे हालाहलस्थानहृदयताडनं चेति प्रदर्शितमित्यभिप्रायः । अत्र उत्प्रेक्षातिशयोक्तिकाव्यलिंगध्वनिभेदानां संसृष्टिः ॥६२॥

स्त्रियोंके अधरमें अमृत और छातियोंमें विष रहता है इसी हेतु लोग अधरपान करते हैं और छातीमें मुष्टिका प्रहार करते हैं ॥ ६२ ॥

धन्यास्त एव धवलायतलोचनानां ।
तारुण्यदर्[2]पघनपीनपयोधराणाम् ॥
क्षामोदरोपरि लसत्त्रिवलीलतानां ।
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥६३॥

अथ तावत्कामिनीगर्हणं किं विरक्ताः सन्ति वा न वेत्याशंकायां सन्त्येवेति मनसि निधाय तत्रापि सुविरक्तदुर्विरक्तभेदेन द्वैविध्यं प्रतिपादयिष्यन्नादौ सुविरक्तपद्धतिं वर्णयितुमुपक्रमते धन्या इत्यादिभिर्नवभिः--धन्या इति ॥ त एव पुरुषा धन्याः सुकृतशालिनः सुविरक्ता इति यावत् । " सुकृती पुण्यवान् धन्यः " इत्यमरः । ते क इत्याकांक्षायामाह । धवले पुण्डरीकदलसदृशे आयते कर्णांतविश्रांते च लोचने यासां तासाम् । तारुण्यदर्पेण यौवनमदोद्रेकेण घनौ पीवरौ पयोधरौ स्तनौ यासां तासाम् । क्षामोदरस्यातिकृशमध्यस्योपरि उपरिष्टाल्लसन्त्यः प्रकाशमानाः यास्त्रिवल्यः तिस्रश्च ता वल्यश्च त्रिवल्यः " दिक्संख्ये संज्ञायाम् " इति समासः । संख्यापूर्वत्वेऽपि सप्तर्षय इत्यादिवत् ज्ञेयमित्युक्तं प्राक् । ता लता इव यासां तासाम् । तेनैतासां पद्मिनीत्वं सूच्यते । तदुक्तं रतिरहस्ये । " त्रिवलिललितमध्या हंसवाणी सुवेशा " इति । क्षामेत्यत्र " क्षायो मः " इति मत्वम् । तथा चेत्थंभूतरूपसम्पन्नानां कामिनीनामाकृतिमाकारविशेषं दृष्ट्वा । " इङ्गितं हृद्गतो भावो बहिराकारमाकृतिः " इति सज्जनः । येषां पुरुषाणां मनो विकृतिं विकारं तत्परतन्त्रत्वमिति यावत् । नैति प्राप्नोति अत एव धन्या इति सम्बन्धः । एवं निर्विकारचित्तत्वं शमसम्पन्नानामेव न त्वन्येषामिति भावः । यदुक्तम् । " शमो वैराग्यानां निर्विकारचित्तत्वम् " इति । वसन्ततिलका वृत्तम् ॥६३॥

---

१ तरला इति पाठांतरम् । २ रूप इति पाठान्तरम् ।

चञ्चल बडे नेत्रवाली, यौवनके अभिमानसे भरी, दृढ और पुष्ट-स्तनशाली, जिनके कृशोदरपर त्रिवलीलता शोभती है ऐसी स्त्रियोंकी आकृति देखकर जिन पुरुषोंके मनमें विकार नहीं उत्पन्न होता वे धन्य हैं ॥ ६३ ॥

**बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः ।**
**किं क्षिप्यंते विरम विरम व्यर्थ एष श्रमस्ते ॥**
**सम्प्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते ।**
**क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६४ ॥**

अथ पूर्वोपभुक्तकामिनीसम्बोधनव्यञ्जनसुविरक्ततां प्रगटयति—बाले लीलामुकुलितमिति ॥ हे बाले मुग्धे, लीलया विलासवैचित्र्या मुकुलितान्यर्धनिमीलितानि यस्मिन् कर्मणि तद्यथा तथा मन्थरा अलसप्रायाः अमी दृष्टिपाता विलोकनप्रसाराः किं किमर्थं क्षिप्यन्ते । न विक्षेप्या इत्यर्थः । किन्तु विरम विरम अभीक्ष्णं विरम । दृष्टिविक्षेपादिति शेषः । आभीक्ष्ण्ये द्विर्भावः । " व्याङ्परिभ्यो रमः " इति परस्मैपदम् । कुत एषोऽयं ते श्रमः कटाक्षविक्षेपजनितायासो व्यर्थो निरर्थकः अभिमतफलानिष्पत्तेरिति भावः । नन्वेतावत्पर्यंतं मदायत्तचित्तेषु युष्मासु कथं फलासिद्धिरित्यत आहुः । संप्रतीदानीं वयमन्ये परे त्वद्विलासलालसत्वेन संमोहितास्तदानींतना इदानीं न भवाम इत्यर्थः । कुतो बाल्यमुपरतं नष्टम् । बाल्यशब्देन यौवनं लक्ष्यते । त्वत्पारतंत्र्यकारि यौवनमुपरतमित्यर्थः । यद्वा बाल्यमविवेकित्वमुपरतम् । किं त्वास्था परिशीलनादरः वनांते अरण्यमध्ये वर्तते इति शेषः । न तु त्वयि । रागं परित्यज्य वैराग्येण वनवासमपेक्षामाह इत्यर्थः । तत्कुतः मोहोऽज्ञानं क्षीणो ध्वस्तः । त्वदासंगजननहेतुर्निर्मूलोऽभूदित्यर्थः । अतो जगज्जालमशेषप्रपंचं तृणमिव निःसारमालोकयामः । " निस्पृहस्य तृणं जगत् " इति लक्षणात्तृणं पश्यामः । इदानीं ज्ञानोदयवशाच्च मनःसुखातिरिक्तं सर्वं तुच्छमनुसंदधाम इत्यर्थः । अतस्त्वया न प्रेक्षणीयमिति भावः । मन्दाक्रांता वृत्तम् ॥ ६४ ॥

१ सुन्दरा इति पाठान्तरम् ।

हे बाले ! लीलासे किंचित् विकसित और मन्थर कटाक्ष हमपर क्यों फेंकती है विश्राम ले ले। हमारे प्रति तेरा यह श्रम व्यर्थ है क्योंकि अब हम कुछ औरही हो गये। लडकपन हमारा छूट गया, वनमें रहते हैं, मोहभी क्षीण होगया और इस जगत्के जालको तृणसमान देखते हैं ॥ ६४ ॥

**इयं बाला मां प्रत्यनवरतमिन्दीवरदल- ।**
**प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ॥**
**गतो मोहोऽस्माकं स्मरशबरबाणव्यातिकर- ।**
**ज्वलज्ज्वाला शान्तातदपि न वराकी विरमति॥६५॥**

उक्तमेवार्थं भंग्यंतरेणाह–इयमिति ॥ इयमेषा बाला मुग्धा मां प्रति मामुद्दिश्यानवरतमविच्छिन्नं यथा तथा इन्द्रीवरदलप्रभाचोरमिंदीवरकांतिमोषकं तत्कल्पमित्यर्थः। चक्षुः क्षिपति प्रसारयति। अनया बालया किमभिप्रेतमपेक्षितं तन्न जानामीत्यर्थः। ननु तया त्वत्संग एवापेक्षितस्तं कुतो न जानासीत्याशंकायामाह। अस्माकं मोहो गतः उपरतः। इदानीमिति शेषः। ननु पूर्वं मामित्येकवचनं प्रयुज्यास्माकमितीदानीं बहुवचनप्रयोगात्कथं सामानाधिकरण्यमुपपद्यत इति चेत्तथापि निवृत्तिमार्गोत्सुकित्वप्रयुक्तात्मसंभावनया बहूकरणं न दोषायेति समाधेयम्। यद्वा मामिति समुदायानिर्देशेन वा न दोषः। तथा स्मर एव शबरः किरातस्तस्य बाणव्यतिकरेण शरसंपर्केण यो ज्वरः संतापस्तस्य ज्वाला शांता विरतेत्यर्थः। तदपि तथापि वराकी न विरमति विरतिं न प्राप्नोति। पूर्वं प्राणप्रियतया गरीयस्यां बालायां वराकीशब्दप्रयोगेणास्यात्यंतवैराग्यं सूच्यते। " जल्पभिक्षकुट्टलुंट० " इत्यादिना षाकन्निति षाकन्प्रत्यये षित्वात् ङीष्प्रत्यये च वराकीति सिद्धम्। शिखरिणी वृत्तम् ॥ ६५ ॥

इस बाला स्त्रीका क्या अभिप्राय है जो यह कमलदलोंकी प्रभाके तिरस्कार करनेवाले नेत्रोंको मेरी तरफ चलाती है, अब हमारा अज्ञान गया और कामदेवरूपी भीलके बाणोंसे उठी हुई

अग्नि शांत होगई तोभी यह मूर्खिणी बाला विरामको प्राप्त नहीं होती अर्थात् नेत्रोंका फेकना नहीं छोडती ॥ ६५ ॥

किं कंदर्प शरं कदर्थयसि रे कोदंडटङ्कारितं ।
रे रे कोकिल कोमलं कलरवं किं वा वृथा जल्पसि ॥
मुग्धे स्निग्धविदग्धचारुमधुरैर्लोलैः कटाक्षैरलं ।
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ६६ ॥

संप्रति साटोपपरिवारकंदर्पनिराकरणवचनमाह--किमिति ॥ रे कंदर्प ! हे मदन ! रे इति नीचसंबोधने । " नीचसंबोधने तु रे " इत्यमरः । एवमुत्तरत्रापि । कोदण्डटंकारितं कोदण्डटंकारवत् कृतं धनुर्गुणटंकारपूर्वकमित्यर्थः । " तत्करोति० " णिचि णाविष्ठवद्भावे " विन्मतोर्लुक् " । शरं त्वदीयबाणं किं किमर्थम् । कुत्सितोऽर्थः कदर्थः । " कोः कत्तत्पुरुषेऽचि " इति कुशब्दस्य कदादेशः । कदर्थं करोषि कदर्थयासि व्यर्थयसीत्यर्थः। धात्वर्थे णिचि सिप् । तथा रे रे कोकिल हे कलकंठ अत्र " असूयासंमतिकोपकुत्सभर्त्सनेषु " इत्यसूयार्थे द्विरुक्तिः । " स्वरितमाम्रेडितम् " इत्यादिना प्राप्तस्य प्लुतस्य " साहसमानिच्छता विभाषा वक्तव्या " इति पाक्षिकः प्रतिषेधः । " शास्त्रत्यागः साहसम् " इति हरदत्तः । कोमलं रुचिरं कलरवं मधुरस्वरम् । " काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः। किं किमर्थं वा वृथा व्यर्थं जल्पसि कूजसि व्याहरसीति यावत् । न व्याहर्तव्यमित्यर्थः । प्रयोजनाभावादिति भावः । तथा रे मुग्धे हे सुन्दरि, स्निग्धाः सांद्राः । " स्निग्धं तु मसृणे सांद्रे" इत्यमरः । विदग्धा विविधविलासविशेषविवरणनिपुणाः चारवः इन्दीवरारविंदादिवत्स्वभावरमणीयाः मधुराः सुधाधारावन्मनोहराश्चेति । विशेषणमपि मिथो विशेषणविशेष्यभावविवक्षायां " विशेषणं विशेष्येण बहुलम् " इति समासः । तैस्तथा लोलैः निसर्गचंचलैः कटाक्षैरपांगावलोकनैरलम् । यद्वा स्निग्धैः । " विश्रंभे परमां काष्ठा-

१ कर इति पाठान्तरम् । २ झंकारितैः इति पाठान्तरम् । ३ वल्गसे इति पाठान्तरम् । ४ मुग्ध० इति पाठान्तरम् ।

मारूढे दर्शनादिभिः । येनांतरंगं द्रवाति स स्नेह इति कथ्यते ॥ " इत्युक्तलक्षणस्नेहपरिष्कृतैस्तथा विदग्धैः विरक्तस्यापि मन्मथविकारोद्दीपनचतुरैरित्यर्थः । " यद्दर्शने विरक्तोऽपि क्षुभ्यत्येतत्समन्मथम् । " इति लक्षणात् । तथा चारुभिः विषयमात्रविश्रांतिविरहिणीशृंखलवृत्तित्वमदमंथरत्वादिगुणशीलत्वस्य विवक्षितत्वात् स्मिताकारैरित्यर्थः । तदुक्तं भावप्रकाशे । "अपरिच्छिन्नविषयमदमन्थरमीलितम् । स्फुरद्रूपक्षतायुक्तं तत्स्मेरमिति कथ्यते ।" इति । तथा मधुरैः सन्तापहरैः । "शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् ।" इति लक्षणात् । तथा लोलैः सतृष्णैः संभोगौत्सुक्यभावनातत्परैरित्यर्थः । तदुक्तम् । "कटाक्षैर्हासिगर्भैस्तु संभोगौत्सुक्यभावना । " इति कटाक्षैः । "यद्गतागतविश्रांतिवैचित्र्येण प्रवर्तनम् ।तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते।" इत्युक्तलक्षणैरलम् । इत्थंभूतकटाक्षा न प्रवर्तनीया इत्यर्थः । अत्र वारणार्थयोगात् पक्षे तृतीया । ननु कुत एव निराक्रियते इति चेत्तत्राह । चेतो मदीयचित्तं कर्तृ चुंबितमास्वाद्यमानं चंद्रचूडस्य चंद्रशेखरस्य चरणध्यानमेवामृतं येन तत्तथोक्तं सत् वर्तते तिष्ठाति । स्मरहरचरणध्यानावधानसत्वरसञ्जातपरमवैराग्योल्लसितचित्तं मामेते क्षुद्राः किं करिष्यंतीत्येको भावः । अमृतपानपरितृप्तस्य किमारनालेनेत्यपरो भावः । ब्रह्मानन्दभारितस्य किं वैषयिकक्षुद्रानन्देनेत्यपरतरो भावः । नाहमिदानीं पूर्ववद्युष्मत्किंकरः किंतु शंकरकिंकरः अतो साध्यः सिसाधयिषतां युष्माकं कोऽयमपस्मार इत्यपरतमो भावः । सर्वथा नास्माकं कामिन्यपेक्षास्तीति परमो भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

अरे क्षुद्र कामदेव ! अपने धनुषके टंकारशब्दसे हमको क्या त्रास देता है ? अरे कोकिल ! कोमल मधुर शब्दसे क्या वृथा बोलती है और हे सुन्दरी ! प्रेम और चतुराईसे भरे सुंदर मधुर चंचल कटाक्ष अब तू मत चलाव । मेरा मन आस्वादित चंद्रचूड शिवजीके चरणध्यानरूपी अमृतमें मग्न हो रहा है ॥ ६६ ॥

**विरहेऽपि संगमः खलु परस्परसंगतं मनो येषाम् ॥**
**हृदयमपि विघट्टितं चेत् संगो विरहं विशेषयति ६७॥**

अथ पञ्चविषयविरक्तिप्रकारमाह--विरह इति ॥ येषां स्त्रीपुरुषाणां परस्परमन्योन्यं संगतमन्योन्यानुरागबद्धमित्यर्थः । तेषां विरहेऽपि वियोगावस्थायामपि संगमः खलु समागम एव खलु । " हृदयसंगम एव सुसंगमो न तनुसंगम एव सुसंगमः । " इति वचनात् अन्तरङ्गबलीयस्त्वन्यायाच्चेति भावः । मनोनियमने तु संगो विरहहेतुक एव भवतीत्याह–हृदयमपि मनोऽपि विघट्टितं सम्यक् क्षतं वैराग्यव्रणीकृतं चेत्यर्थः संगः समागमोऽपि विरहं वियोगमेव विशेषयति विशिष्टं करोति। तमेवापेक्षाविषयीकरोतीत्यर्थः । तदानीं तस्यैवाक्षतत्वादिति भावः । अतः सर्वथा मनोनियमनमावश्यकं तेन चेंद्रियप्रवृत्त्युपरमे विषयाणामेकांततः पराहतिरिति कृत्वा पञ्चविषयविरक्तिमानेयमेवेति निगूढा संधिः । परस्परेत्यत्र " कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः " इति वक्तव्यात्परशब्दस्य द्विर्भावः " समासवच्च बहुलम् " यथा न समासवत्प्रथमैकवचनं तथा पूर्वपदस्येति वक्तव्यं प्रथमैकवचनं द्वितीयाद्येकवचनांतत्वमपरपदस्येति । आर्याभेदः ॥ ६७ ॥

जिन स्त्रीपुरुषोंका मन परस्परके विषयमें अनुरागबद्ध हो उनका उनकी वियोगावस्थामेंभी संगमही है, और जिनका मन विघट्टित ( अच्छी तरहसे क्षत ) है उनका संगमभी विरहहेतुक है तात्पर्य हृदयसंगमही संगम है. कुछ शरीरका संगम संगम नहीं है ॥ ६७ ॥

**किं गतेन यदि सा न जीवति ।**
**प्राणिति प्रियतमा तथापि किम् ॥**
**इत्युदीक्ष्य नवमेघमालिकां ।**
**न प्रयाति पथिकः स्वमन्दिरम् ॥ ६८ ॥**

अथ कस्यचित्प्रवासिनो विरक्तस्य विचाररूपेण वैराग्यं प्रकटयन्नाह–किमिति ॥ सा मदीया प्रियतमा प्रेयसी न जीवति विरहवेदनया प्राणान् न धारयति यदि तदा गतेन गमनेन । भावे क्तः । किं न किंचिदपीत्यर्थः । यद्वा गतेन गृहमुपगतेन मयेति शेषः । किमथ प्राणिति केनचिद्विनोदोपायेन जीवति यदि तथापि प्राणनेऽपि गतेन किम् । उभयथापि गमनं व्यर्थ-

मेवेत्यर्थः । इति विचार्येति शेषः । इहैव गम्यमानार्थत्वादप्रयोगः । प्रयोगे वा पौनरुक्त्यमित्यलंकारिकाः । पन्थानं गच्छतीति पथिकः कश्चित्पांथः । " पथः कन् " इति कन्प्रत्ययः । नवमेघमालिकां नवीनकादंबिनीं विरहिनिवहसंहारकारिणीमिति भावः । उदीक्ष्य स्वमंदिरं निजगृहं न प्रयाति । वैराग्यनिश्चलचित्तत्वादिति भावः । तदुक्तम् । " यद्भावि तद्भवत्येव यदभावि न तद्भवेत् । इति निश्चितबुद्धीनां न चिंता बाधते क्वचित् ॥ " इति । रथोद्धता वृत्तम् ॥ ६८ ॥

यदि प्रियतमा जीती न हो तो घर जानेसे क्या ? और किसी प्रकारसे कदाचित् जीतीभी रही हो तौभी क्या ? इस प्रकार कोई पथिक नवीन मेघमालाको देखके विचार करके अपने मन्दिरको नहीं गया ॥ ६८ ॥

**विरमत बुधा योषित्संगात्सुखात् क्षणभंगुरा- ।**
**त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ॥**
**न खलु नरके हाराक्रान्तं घनस्तनमण्डलं ।**
**शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६९ ॥**

अथ बुधानां तत्र वैराग्यमुपदिशति–विरमतेति ॥ हे बुधाः विद्वांसः, योषित्संगाद्युवतिसमागमाद्यत्सुखं तस्मात् । कीदृग्विधात् क्षणभंगुरात् क्षणिकात् क्षणिकसुखप्रदयोषित्संगादित्यर्थः । " भंजभासमिदो घुरच् " इति घुरच्प्रत्ययः । " जुगुप्साविराम० " इत्यादिना पञ्चमी । विरमत उपरता भवत । तुच्छसुखदं योषित्समागमं त्यजतेत्यर्थः । " व्याङ्परिभ्यो रमः " इति परस्मैपदम् । किन्तु करुणा दुःखिष्वनुकंपा मैत्री पुण्यकृत्सु मित्रता प्रज्ञा बुद्धिविशेषः सुखिष्वनुमोदितेति यावत् । एतेन पापिषूपेक्षा लक्ष्यते । एता एवांतःकरणमलशोधकत्वाच्चित्तपरिकर्माणीति वदंति सांख्याः । ता एव वधूजनस्तस्य संगमं परिशीलनतात्पर्यमिति यावत् । कुरुत एतेनात्यूर्जसुखं संभवति किं क्षणिकसुखावलंबनेनेति भावः । विपक्षे बाधकमाह । नरके निरये हाराक्रांतं मुक्ताहारोपशोभितं घनस्तनमंडलं पटुतरकुचकलशभारो

वा । अथेति वाक्यारंभे रणन्ती मणिमेखला मणिखचितरशना यस्य तत्त-थोक्तम् । कांचीकलापरमणीयामित्यर्थः । श्रोणीबिंबं नितंबमंडलं वा शरणं रक्षणं न खलु न भवति हिं । करुणादिसमागमस्तु नैव भवत्यतः स एवा-वश्यं स्वीकर्तव्य इति भावः । हरिणी वृत्तम् ॥ ६९ ॥

**हे पण्डितो ! स्त्रियोंके संगसे पैदा हुए क्षणिक नश्वर सुखसे विश्राम लो ( हटो ) और मैत्री करुणा और प्रज्ञारूपी वधूसे संगम करो । नरकमें जब ताडना होगी उस समय हारोंसे भूषित स्त्रियोंके स्तनमण्डल और क्षुद्रघंटिकासे शोभित कटि सहायता न करेंगी ॥ ६९ ॥**

**यंदा योगाभ्यासव्यसनकृशंयोरात्ममनसो- ।**
**रविच्छिन्ना मैत्री स्फुरति कृतिनस्तस्य किमुतैः ॥**
**प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः ।**
**सनिश्वासामोदैःसकुचकलशाश्लेषसुरतैः ॥ ७० ॥**

एवं सांख्यरीत्या वैराग्यमुक्त्वा संप्राति योगमतानुसारेणाह–यदेति ॥ यदा यस्मिन् समये। यस्येत्यध्याहारः उत्तरत्र तच्छब्दसद्भावात् । तथा च । यस्य संबन्धिनः योगाभ्यासे अष्टांगयोगपरिशीलने यद्व्यसनमासक्तिस्तेन कृश-योस्तत्परतन्त्रयोरित्यर्थः । आत्ममनसोः प्रत्यगात्मांतःकरणयोः मैत्री मित्र-त्वम् । मैत्री व्याख्याता । स्फुरति प्रकाशयाति । योगाभ्यासवशेनाशेषबा-ह्यविषयान् परित्यज्य यदात्मारामेमेव मनो भवतीत्यर्थः । तदा तस्य कृतिनो धन्यस्य । " इष्टादिभ्यश्च " इतीनिप्रत्ययः तैः किमु न किमपीत्यर्थः । ते क इत्याशंकायामाह । प्रियाणां प्रियतमानां संबंधिभिरालापैः श्रोत्रसुखा-वहमृदुमधुरव्याहारैश्च । अधरमधुभिः रसनेंद्रियप्रीतिजनकाधरामृतैश्च । तथा निश्वासामोदेन सह सनिश्वासामोदैः पद्मिनीजातित्वान्निश्वासकघ्राणतर्पणगं-धसंबन्धबन्धुरैरित्यर्थः । वक्त्रविधुभिर्नयनानन्दकरमुखचंद्रैश्च । अत्र चंद्रस्ये-

---

१ सदा इति पाठान्तरम् । २ वशयो० इति पाठान्तर । ३ यमिनः इति पाठान्तरम् ।

कत्वेऽपि मुखबाहुल्याद्बहुलत्वसिद्धिः । तथा सकुचकलशाश्लेषाणि कचकुम्भालिंगनसहितानि यानि सुरतानि त्वगुपस्थेंद्रियामन्दानन्दकरबाह्याभ्यंतरसंभोगविशेषास्तैश्च एवमशेषेंद्रियग्रामसंतर्पणैरपि तैः किमिति संबन्धः। आत्मानन्दानुभववेलायां तेषामतितुच्छतया प्रतीयमानत्वादिति भावः । शिखरिणी वृत्तम् ॥ ७० ॥

जिनके आत्मा और मनकी सदा योगाभ्यासहीके व्यसनसे निरंतर मित्रता फुरती फिर उन्हें प्रियस्त्रियोंके सम्भाषण अधरामृत, श्वासोंकी सुगन्धसहित, मुखचन्द्र और कुचकलशोंको हृदयसे लगाकर सुरतिसे क्या प्रयोजन है ॥ ७० ॥

**यदासीदज्ञानं स्मरतिमिरसंचारजनितं ।**
**तदा दृष्टं नारीमयमिदमशेषं जगदिति ॥**
**इदानीमस्माकं पटुतरविवेकाञ्जनजुषां ।**
**समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ७१ ॥**

अथ वेदांतसिद्धांतरीत्या वैराग्यवर्णनं निगमयति–यदेति ॥ यदा यस्मिन् काले स्मरः काम एव तिमिरं तिमिराख्यनेत्ररोगः अन्धकारश्च गम्यते । " तिमिरं नेत्ररोगे स्यादंधकारेऽपि च स्मृतम् । " इत्यभिधानात् । तस्य संचारेण व्याप्त्या जनितमुत्पादितमज्ञानमविवेक आसीत् तदा तस्मिन् काले अशेषं सर्वमिदं जगत् नारीमयं योषिद्रूपमिति दृष्टमाकलितम् । अज्ञानवशात्तदावबुद्धमित्यर्थः । इदानीमस्मिन् काले तु पटुतरः अज्ञाननिरसनदक्षः अन्यत्र नेत्ररोगनिराकरणसमर्थश्च यो विवेकस्तत्त्वज्ञानमेवांजनं नेत्रकल्याणाख्यसिद्धांजनं तज्जुषां प्राप्तवतामस्माकं सम्बंधिनी दृष्टिर्मतिः दृक्च । असमासमा संपद्यमाना समीभूता । अभूततद्भावे च्विः । निजप्रकृतिमापन्ना सतीत्यर्थः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । " तद्धितार्थ० " इत्यादिना समासः । पात्राद्यदन्तत्वान्न स्त्रीत्वम् । ब्रह्म ब्रह्ममयं मनुते ज्ञानोदयवशाद्ब्रह्मस्वरूपमवबुध्यते । यथांजनेन नेत्ररोगनिवृत्तौ घटाद्यर्थ-

१ सर्वं इति पाठान्तरम् २ जगद्भूत् इति पाठान्तरम् । ३ दृशां इति पाठान्तरम् ।

तत्त्वज्ञानेन कामांधकारप्रयुक्ताज्ञानावरणापाये परवस्तुसाक्षात्कारो भवति ततः सम्यग्दृष्ट्या सर्वमिदं ब्रह्माकारतया पश्यति अयमेव वेदांतसिद्धांत इति भावः । अतो विवेकस्य परश्रेयोहेतुत्वात्तदधिगमार्थमेव यत्नः कर्तव्य इति तात्पर्यम् । रूपकालंकारः । वृत्तं पूर्ववत् ॥ ७१ ॥

**कामदेवरूपी तिमिररोगसे उत्पन्न अज्ञान जबतक मुझमें था तवतक समस्त जगत् स्त्रीमय दृष्टि पडता रहा अब हमने सुन्दर विवेकरूपी अञ्जन लगाया है तो समदृष्टि हो गई त्रैलोक्य ब्रह्ममय दीख पडता है ॥ ७१ ॥**

**तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ॥**
**यावदेव न कुरंगचक्षुषां ताड्यते चटुललोचनाञ्चलैः ॥७२॥**

अथैतद्वैलक्षण्येन दुर्विरक्तपद्धतिमाह तत्रादौ यदुक्तं कृतिनो विवेकस्फुरणमिति तदेतदपवदति–तावदिति ॥ कृतमेभिः कृतिनस्तेषां कुशलानामपि । " इष्टादिभ्यश्च " इतीनिप्रत्ययः । एष पूर्वोक्तो निर्मलो निष्कलंको विवेकस्तत्त्वावबोध एव दीपः । स्वार्थे कः । तावत्तावत्पर्यंतमेव स्फुरति दीप्यते । कियत्पर्यंतमित्याकांक्षायामाह । कुरंगचक्षुषां हरिणलोचनानां चटुलानि चञ्चलानि लोचनाञ्चलानि कटाक्षवीक्षणानि तैः कलाप्रायैरिति भावः । यावद्यावत्पर्यंतमेव न ताड्यते न निहन्यते नावलोक्यत इत्यर्थः । तावदेवेति सम्बन्धः । विवेककुशलोऽपि जनः कामिनीकटाक्षवीक्षितः को वा विवेकनिर्वहणदक्ष इति भावः । यद्यपि " अंचलं त्वंशुकांते स्यात् " इत्यमरः तथापि अंतिमत्वसाम्यादौपचारिकोऽयं निर्देश इति मंतव्यम् । रथोद्धता वृत्तम् ॥ ७२ ॥

**विवेकियोंकेभी निर्मल विवेकका दीपक तभीतक प्रकाशित रहता है जबतक मृगनयनी स्त्रियोंके चञ्चल लोचनरूपी आंचलसे नहीं बुझाया जाता ॥ ७२ ॥**

---

१ चपल इति पाठान्तरम् ।

वचसि भवति संगत्यागमुद्दिश्य वार्ता ।
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ॥
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं ।
कुवलयनयनानां को विहातुं समर्थः ॥ ७३ ॥

अथैतेषां दुर्विरक्तत्वाभिद्योतकानीदृशान्येव वचनान्याह--वचसीति ॥ श्रुतिमुखराण्यश्रांतश्रुतिपाठतत्पराणि मुखानि येषां तेषां निरन्तरवेदाभ्यसनव्यसनरसनानां वेदांतपारगाणामपीत्यर्थः। पंडितानां विवेकिनां वचसि केवलं वाङ्मात्र एव संगत्यागं वधूसंसर्गत्यागमुद्दिश्य वार्ता गाढा भवति न त्वंतःकरण इति भावः । कुतः अरुणरत्नग्रंथिः पद्मरागमणिखचितः काञ्च्येव कलापो भूषणं यस्य तत्तथोक्तम् । " शोणरत्नं लौहितकं पद्मरागोऽथ मौक्तिकम् । कलापो भूषणे बर्हे " इति चोभयत्राप्यमरः । कुवलयनयनानामिंदीवराक्षीणां जघनं कटिपुरोभागं विहातुं त्यक्तुं कः समर्थः । प्रायश ईदृशान्येव दुर्विरक्तानां वचनानीति भावः । मालिनी वृत्तम् ॥ ७३ ॥

**संग त्याग करनेकी कथा शास्त्रवक्ता पंडितोंके मुखसे केवल कथनमात्रही है नहीं तो लालरत्नजडित करधनीवाली कमलनयनी स्त्रियोंके जघनस्थल छोडनेमें कौन समर्थ है ॥ ७३ ॥**

स परप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः ॥
यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपिचाप्सरसः ॥ ७४ ॥

स इति ॥ सोऽसावलीकपंडितः अनृतभाषी । " अलीकं त्वप्रियेऽनृते " इत्यमरः । परप्रतारको लोकवञ्चकः । कोऽसावित्यत आह । यः अलीकपण्डितो युवतीः तरुणीः । " यूनस्तिः " इति तिप्रत्ययः । निंदति गर्हयति स इति सम्बन्धः। ननु निःसंगत्वाद्युवतीनिंदाकरणे कथं प्रतारकत्वमत आह--यस्मात्कारणात् तपसश्चांद्रायणादेः व्रतोपवासादिरूपस्य वा फलं स्वर्गस्तत्र स्वर्गेऽपि चाप्सरस उर्वशीप्रभृतयस्तत्रापि तत्संगम एवेत्यर्थः । अतः परप्रतारक इति भावः । " स्त्रियां बहुष्वप्सरसः स्ववेंश्या उर्वशीमुखाः ।"

१ स्व० इति पाठांतरम् । २ तस्यापि फलं तथाप्सरसः इति पाठांतरम् ।

इत्यमरः । स्वपरप्रतारक इति पाठेऽप्ययमर्थः । योऽलीकपण्डितः पण्डितमानी रहस्यानभिज्ञ इत्यर्थः । युवतीर्निन्दन्ति असौ स्वस्य परेषां च प्रतारकः आत्मवञ्चकश्चेत्यर्थः । कुतो यस्मादित्यादि शेषं समानम् । स्वपरफलवेदनबोधनयोः परिज्ञानाभावादुभयवञ्चक इत्यर्थः । आर्याभेदः ॥ ७४ ॥

जो स्त्रियोंकी निंदा करता है वह झूठा पंडित है । आप तो ठगाही गया पर औरोंकोभी ठगता है क्योंकि तपस्याका फल स्वर्ग और स्वर्गका फल अप्सराभोग है सो यहां प्राप्त है ॥ ७४ ॥

**मत्तेभकुम्भदलने भुवि सन्ति धीराः ।**
**केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ॥**
**किं तु ब्रवीमि बलिनां पुरतः प्रसह्य ।**
**कन्दर्पदर्पदलने विरला मनुष्याः ॥ ७५ ॥**

अथ मन्मथस्यात्यन्तदुर्जयत्वमाह--मत्तेभेति ॥ भुवि भूलोके मत्तेभानां मत्तमातंगानां कुम्भदलने कुम्भस्थलविदारणे समर्था इति शेषः । धीराः शूराः[1] सन्ति । तथा केचित् पुरुषाः प्रचंडोऽत्यन्तकोपनो यो मृगराजः सिंहस्तस्य वधे हिंसायां दक्षाः समर्थाः सन्ति गजघातिभ्योऽप्युत्तमाः शूराः सम्भवन्तीत्यर्थः । किंतु बलिनां बलाढ्यानां शूराणां ज्ञानबलशालिनामिति च गम्यते । पुरतोऽग्रे ब्रवीमि निःशङ्कं करमुद्धृत्य सडिंडिमघोषमुद्घोषयामीत्यर्थः । किमुद्घोषयसीत्यत आह । प्रसह्य बलात् भुजबलाद्बुद्धिबलाच्चेत्यर्थः । कन्दर्पदर्पदलने मदनमदविदारणेसमर्थाः मनुष्याः विरलाः मृग्याः प्रायशो न सन्तीत्यर्थः । शंभुं तद्भक्तांश्च विना मदनविजयिनो न सन्त्येवेति शिवभक्ताग्रेसरस्य कवेर्निगूढतराभिसन्धिः । अत्र कन्दर्पदर्पेति सकृद्व्यञ्जनद्वयावृत्तेः वृत्त्यनुप्रासाख्यः शब्दालंकारः । लक्षणं तूक्तम् । वसन्ततिलका वृत्तम् ॥ ७५ ॥

उन्मत्त हाथीके मस्तक विदारनेवाले शूर इस पृथ्वीपर अनेक हैं और प्रचंड सिंहके मारनेमें दक्ष योधाभी कितनेही हैं परन्तु बलवानोंके आगे हम हठकर यह कहते हैं कि कामदेवके मदका दलनेवाला कोई विरलाही पुरुष होगा ॥ ७५ ॥

---

१ शूराः इति पाठांतरम् ।

**सन्मार्गे तावदास्ते प्रभवति च नस्तावदेवेन्द्रियाणां।**
**लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ॥**
**भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते ।**
**यावल्लीलावतीनां हृदि नधृतिमुषो दृष्टिबाणाः पतंति।७६।**

अथ च पुनर्वचनवैचित्र्यमिवाह-सदिति ॥ नरो विद्वानपीति भावः। सन्मार्गे श्रुतिस्मृतिबोधिताचारे तावत्तावत्पर्यंतमेवास्ते वर्त्तते । इंद्रियाणां चक्षुरादीनां च तावदेव प्रभवति समर्थो भवति । नियमन इति शेषः । लज्जां जुगुप्सितकर्माचरणाच्चेतःसंकोचलक्षणां व्रीडां च तावदेव विधत्ते अनुवर्तते। विनयं नम्रत्वं च तावदेव समालंबते स्वीकुरुते । कियत्पर्यंतमित्याशङ्काया-माह। भ्रूरेव चापं कार्मुकं तेनाकृष्टाश्च ते मुक्ताश्चेति विशेषणसमासः। एकत्र भ्रूभङ्गपूर्वकमपरत्र चापपूर्वकं च प्रयुक्ता इत्यर्थः। श्रवणपथगताः श्रोत्र-मार्गगताः एकत्र कर्णांतविश्रांतत्वादपरत्र तावत्पर्यंतमाकर्षणाच्चेति भावः। नीलानि पक्ष्माणि लोमान्यन्यत्र गरुत्मतश्च येषां ते तथोक्ताः । धृतिं मुष्ण-तीति धृतिमुषो धैर्यभेदिन एते प्रसिद्धा लीलावतीनां विलासिनीनां दृष्टय एव बाणाः यावद्यावत्पर्यंतं हृदि मानसे वक्षसि न पतंति न प्रावशांति तावदिति संबन्धः । तदनन्तरं सन्मार्गप्रवर्तनादिकं निर्वोढुं कः समर्थ इति भावः। उक्तं च प्रबोधचन्द्रोदये। “ तावद्विवेकविभवस्तावत्स-न्मार्गवर्तनं पुंसाम । निपतंति दृष्टिविशिखा यावन्नेंदीवराक्षीणाम् ॥ ” इति। अत्र द्वितीयार्थे समस्तवस्तुवर्तिसावयवरूपकालंकारः। स्रग्धरा वृत्तम् ॥७६॥

पुरुष सन्मार्गमें तभीतक रहता है, इन्द्रियोंको उसी समयतक वशमें रख सकता है और लज्जा विनयभी उसी कालतक रहते हैं जबतक श्यामबरौनी पलकरूपी पंख धारण किये, भौंहरूपी धनुषने छोडे, कानोंतक फैले, धैर्य छुडानेवाले लीलावती सुन्दर स्त्रियोंके नयनरूपी बाण छुटकर हृदयमें नहीं लगते ॥ ७६ ॥

---

१ स इति पाठांतरम् ।

**उन्मत्तप्रेमसरम्भादारभन्ते यदंगनाः ॥**
**तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ७७ ॥**

किं बहुना ब्रह्माप्यंगनोद्योगप्रत्यूहाचरणे न धीरो भवतीत्याह–उन्मत्तेति ॥ अंगनाः स्त्रियः उन्मत्तोऽत्युत्कटो यः प्रेमा अनुरागस्तस्य संरम्भात्संभ्रमात् । " संरम्भः संभ्रमे कोपे " इति विश्वः । यत्कर्मारभंते विहितमविहितं वा कर्तुमुद्युञ्जत इत्यर्थः । तत्र कर्मणि प्रत्यूहं विघ्नम् । ' विघ्नोऽन्तरायः प्रत्यूहः " इत्यमरः । आधातुं कर्तुं ब्रह्मापि किमुतान्य इति भावः । कातरः सभयः असमर्थः खल्वित्यर्थः । अनिवारनिश्चयानामनावृतानामङ्गनानां को वा निवारयितेति भावः ॥ ७७ ॥

**अतिप्रेमके उमंगसे उन्मत्त होकर स्त्रीलोग जिस कामका आरम्भ कर देती हैं उस कामके रोकनेकी ब्रह्माकीभी शक्ति नहीं ॥ ७७ ॥**

**तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ॥**
**यावज्ज्वलति नांगेषु हतः पञ्चेषुपावकः ॥ ७८ ॥**

तावदिति ॥ महत्त्वं महानुभावत्वं पांडित्यं प्राज्ञत्वं कुलीनत्वं महाकुलप्रसूतत्वम् । " कुलात्खः " इति खप्रत्ययः । विवेकिता कर्तव्याकर्तव्यविचारचतुरत्वं च तावत्तावत्पर्यंतमेव भवतीति शेषः । यावत् हतो नीचः अश्लाघ्यतापादकत्वान्निकृष्टः । पञ्चारविंदादयः इषवो बाणा यस्य स पञ्चेषुः मदनः स एव पावकोऽग्निरङ्गेषु न ज्वलति नाविर्भवति न सन्तापयतीत्यर्थः । तावदिति संबन्धः । तदनन्तरं को वा महत्त्वादिगुणविशिष्ट इति भावः । " अरविंदमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ " इत्यमरः । अत्र मदने अग्निरूपणादेकदेशवर्तिरूपकम् ॥ ७८ ॥

**बडाई, पंडिताई, विवेक और कुलीनता ये सब मनुष्यकी देहमें तभीतक रहते हैं जबतक शरीरमें कामाग्नि नहीं प्रज्वलित होती ॥ ७८ ॥**

**शास्त्रज्ञोऽपि प्रगुणितनयोऽप्यात्तबोधोऽपि बाढं ।**
**संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ॥**
**येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती ।**
**वामाक्षीणां भवति कुटिलभ्रूलताकुञ्चिकेव ॥ ७९ ॥**

अथ सांसारिकस्य सद्गतिर्दुर्लभेति सहेतुकमाह–शास्त्रज्ञ इति ॥ शास्त्रज्ञः सकलशास्त्ररहस्याभिज्ञोऽपि । " आतोऽनुपसर्गे कः " इति कप्रत्ययः । तत्रापि प्रगुणितः प्रकर्षेणावृत्तिविषयीकृतो नयो नीतिशास्त्रं येन स तथोक्तोऽपि फलवदर्थावबोधनपर्यंतं सम्यक्परिशीलितनीतिशास्त्रोऽपीत्यर्थः । गुणशब्दात् " तत्करोति० " इति ण्यंतात्कर्मणि क्तः । णाविष्ठवद्भावे " विन्मतोर्लुक् " इति लुक् । " गुणस्त्वावृत्तिशब्दाख्ये ज्येंद्रिये मुख्यतंतुषु । " इति वैजयन्ती । तथा बाढं दृढमात्तबोध उत्पन्नज्ञानोऽपि पुमानस्मिन् परिवर्तमाने संसारे सद्गतीनां भाजनं पात्रं योग्य इति यावत् । विरलो मृग्यो भवति स्वर्गादिसद्गतिगामी यः कश्चिदेव भवति न तु बहुल इत्यर्थः । कुतः येन कारणेन एतस्मिन् संसारे वामाक्षीणां मनोहरनयनानाम् । " बहुव्रीहौ " इत्यादिना षचि षित्वात् ङीप् । कुटिला वक्रा भ्रूर्लतेव भ्रूलता भ्रूवल्ली कुंचिकेव विष्कंभविघट्टनसाधनवक्राग्रायोमयशलाकेव निरयनगरस्य यमपुरस्य द्वारं लक्षणया द्वारपिधानकवाटविष्कंभमित्यर्थः । द्वारशब्देन कवाटस्य तेन च तद्विष्कंभस्य च लक्षितत्वादुद्घाटयंती विघट्टयन्ती व्यामोहोत्पादनेन दुर्गतौ प्रवेशयंतीत्यर्थः । भवति खलु अतो विरल इति सन्बन्धः । स्त्रीसंगिनां कुतः सद्गतिरिति भावः । उपमालंकारः । मंदाक्रांता वृत्तम् ॥ ७९ ॥

**शास्त्रज्ञ और नय जाननेवाला और ज्ञानी भी हो परन्तु इस संसारमें दृढतासे सद्गतिका पात्र कोई विरलाही पुरुष होता है इस हेतु कि यहां नरकनगरके द्वारके तालेको सुंदर नेत्रवाली स्त्रियोंकी टेढी भौंह लता घूमती कुंजीके समान खोलती है ॥ ७९ ॥**

---

१ प्रथितविनयोऽप्यात्म० इति पाठांतरम् ।

**कृशः काणः खंजः श्रवणरहितः पुच्छविकलो ।**
**व्रणी पूयक्लिन्नः कृमिकुलशतैराबृततनुः ॥**
**क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः ।**
**शुनीमन्वेति श्वाहतमपि च हन्त्येव मदनः ॥ ८० ॥**

अथ द्वाभ्यां मन्मथस्य चरित्रवैचित्र्यमाह–कृशः इति ॥ कृशः पिंडालाभादस्थिचर्मावशिष्टदेहः । काणोऽधकः यद्वा एकाक्षः । खंजः पादविकलः । अकार्यकरणेन लगुडप्रहाराद्भग्नपाद इत्यर्थः । तथा श्रवणरहितः समूलं छिन्नः कर्णः । पुच्छेन विकलः छिन्नलांगूलः । " येनांगविकारः " इति समासः । व्रणी सर्वांगक्षातिमान् । पूयेन क्लिन्न आर्द्रः । कृमीणां व्रणोत्पन्नापादतुच्छजतूनां कुलशतैरनेककृमिपरंपराभिरित्यर्थः । आवृता व्याप्ता तनुर्यस्य स तथोक्तः । क्षुधा बुभुक्षया क्षाम इति मंतव्यम् । जीर्णः जरया शिथिलावयवः पिठरककपालेन घटमुखवलयेनार्पितगल आसञ्जितकण्ठनालः । शुनको हि घटमुखे स्वशिरो निक्षिप्य अन्नं भक्षयति ततस्तावत्तैव परिपुष्टत्वेनाकृष्टुमशक्यत्वाद्भुवि विघट्टनेनाधःकपालापाये तन्मुखकपालेनासंजितकण्ठो भवतीति प्रसिद्धिः । अत एवंभूत इत्यर्थः । यद्वा चौर्येणान्नादिभक्षणे तद्दंडनार्थं भ्राष्ट्रमध्ये छिद्रं कृत्वा गले आसंजयंति तस्मादित्थंभूत इत्यर्थः । एवं जगुप्सितोऽपि श्वा शुनकः शुनीं सारमेयीम् । नांतत्वात् ङीप् । अन्वेत्यनुसरति निधुवनार्थमिति भावः । तथा हि हतं विनष्टमपि च मदनो हंत्येव मनोविकारोत्पादनेन पीडयत्येव । न तु हतहननमन्याय्यमिति विचारयतीत्यर्थः । शठोऽयं मदनः कं वा कथंभूतावस्थापन्नं न करोतीति भावः । अत्र एवकारोऽत्यंतायोग्यव्यवच्छेदार्थः । पार्थो धनुर्धरो भवत्येवेत्युदाहृत्य क्रियागतैवकारस्य तथाभूतार्थकत्वानुशासनात् । शिखरिणी वृत्तम् ॥ ८० ॥

**दुर्बल, काना, लंगडा, बहिरा, पूंछसे हीन, जिसके घावोंमें राध भरी हो और शरीरपर कीडे फिरते हों, भूंखसे थका, वृद्ध, मिट्टीके घडेका कण्ठ जिसके गलेमें हो ऐसाभी श्वान कुत्तीके पीछे भोगके**

---

१ जीर्णोऽपि करक इति पाठांतरम् । २ निहंत्येव इति पाठान्तरम् ।

लिये जाता है, इससे यह सिद्ध हुआ कि कामदेव मेरेको भी मारता है ॥ ८० ॥

स्त्रीमुद्रां कुसुमायुधस्य जयिनीं सर्वार्थसम्पत्करा ।
ये मूढाः प्रविहाय यांति कुधियोमिथ्याफलान्वेषिणः ॥
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः ।
केचित्पश्चशिखीकृताश्चजटिलाःकापालिकाश्चापरे ८१

स्त्रीमुद्रामिति ॥ सर्वार्थानां संपदं करोतीति सर्वार्थसंपत्करीम् । धर्मार्थकामपुरुषार्थसमृद्धिहेतुभूतामित्यर्थः । " कृञो हेतुताच्छील्यानुलोम्येषु " इति टप्रत्ययः । टित्वात् ङीप् । कुसुमायुधस्य जगज्जैत्रस्य मन्मथस्य जयिनीं जयावहामित्यर्थः । " जिदृक्षि० " इत्यादिना इनिप्रत्ययः । स्त्रीमुद्रां स्त्रीरूपचिह्नां विहाय त्यक्त्वा कुधियो दुर्बुद्धयः अत एव मूढाः कर्तव्याकर्तव्यविचारशून्या मिथ्याफलान्वेषिणः अभूतचरत्वादसत्यप्रायमोक्षफलाकांक्षिणः सन्तः यांति प्रव्रजन्तीत्यर्थः । ते मूढास्तेन निजमुद्राहासजनितकोपेन कुसुमेषुणैव निर्दयतरं दयाहीनं यथा तथा निहत्य नीचैः कृत्वा केचिन्नग्नीकृताः । " नग्नोऽवासा दिगम्बरः " इत्यमरः । अभूततद्भावे च्विः । " अस्य च्वौ " इति दीर्घः । " ऊर्यादिच्विडाचश्च " इति गतिसंज्ञायां " कुगतिप्रादयः " इति समासः । केचिन्मुण्डिताः परमहंसीकृताः न तु सौभाग्यसम्पन्नीकृता इत्यर्थः । अतः कुसुमेषुमुद्रारूपाः स्त्रियो न परिहर्तव्या इति भावः । यथा लोके राजानस्तीक्ष्णदंडा निजाज्ञोल्लंघनापराधिजनान् कांश्चित्सर्वस्वापहारेण वस्त्रहीनान् कुर्वंति । कांश्चित् सर्वतो मुंडितशिरस्कान् कांश्चिदर्धमुंडितमुंडान् कांश्चिज्जटाधारिणः कांश्चित्कपालभिक्षुकान्कुर्वंति तद्वदत्रापि ध्वनिः । अत्र वैराग्यकृतनग्नत्वादेः कुसुमेषुकृतत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः सा च नूनमित्यादिव्यञ्जकाप्रयोगाद्गम्या । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

स्त्रियां कामदेवकी मुद्रा सब अर्थ और सम्पत्की करनेवाली हैं जो मूढ कुबुद्धि उन्हें छोड स्वर्गादिकी इच्छासे निकल भागते

---

१ झषकेतनस्य इति पाठान्तरम् । २ जननीं इति पाठान्तरम् ।

हैं उन्हें विरक्तके वेषमें न समझो किन्तु कामदेवने दया त्याग दण्ड देकर उन्हें नङ्गा किया, किसीका शिर मुंडवाया, किसीके पांच चोटी रखीं, किसीके जटा रखवाई, किसीके हाथमें ठीकरा दे भीख मँगवायी ॥ ८१ ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-।
स्तेऽपि स्त्रीमुखपंकजं सुललितं दृष्ट्वैव मोहं गताः ॥
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-।
स्तेषामिंद्रियनिग्रहो यदि भवेद्विंध्यः प्लवेत्सागरे ॥ ८२॥

किं बहुना महर्षयोऽपींद्रियनिग्रहसमर्था न जाता इत्युपसंहरति–विश्वामित्रेति ॥ वातांबुपर्णान्येवाशनं येषां ते तथोक्ताः शरीरयात्रामात्रोपयोगिवायूदकपरिणतपर्णाहारा एव न त्विंद्रियतुष्टिकरमृष्टान्नभोजना इत्यर्थः । विश्वामित्रपराशरप्रभृतयः । विश्वस्य मित्रं विश्वामित्रो गाधिनन्दनः । " मित्रे चर्षौ " इति दीर्घत्वम् । पराशरो व्यासपिता तौ प्रभृति येषां ते तथोक्ताः । प्रभृतिशब्देन शांडिल्यादयोऽपि संगृह्यन्ते । ये महर्षयः सन्तीति शेषः । तेऽपि सुललितमतिसुन्दरम् । " ललितं त्रिषु सुन्दरम् " इति शब्दार्णवे । स्त्रीणां मेनकारंभासत्यवतीधान्यमालिन्यादियोषितां मुखपंकजं दृष्ट्वैवालोक्यैव मोहं गताः तत्परतन्त्राः जाताः न त्विंद्रियनिग्रहसमर्थाः इत्यर्थः । किं तु ये मानवाः साधारणमर्त्याः सघृतमाज्यप्लुतं तदपि पयसा क्षीरेण दध्ना च युतं मिश्रितं शाल्यन्नं कलमाख्यव्रीह्यन्नमत्यंतवीर्यवृद्धिकरं मृष्टान्नमित्यर्थः। भुञ्जते अभ्यवहरान्ति । " भुजोऽनवने " इत्यात्मनेपदम् । तेषां मानवानामिंद्रियनिग्रहः इन्द्रियदमनं भवेद्यदि तदा विंध्यः पर्वतः सागरे प्लवेत् उन्मज्जेत् । न तु कदाचिदपि विंध्यः प्लवति ग्रावप्लवनस्याश्रुतचरत्वात्तथा च विंध्यप्लवनस्य यथा असम्भावितत्वं तथेंद्रियनिग्रहस्यापीत्यर्थः । वाताद्यशनानामृषीणामेवैतादृगवस्थापन्नत्वं किमुत मृष्टान्नभोजनानां मानवानामिति भावः ।

---

१ तरेत्सागरम् इति पाठान्तरम् ।

अत्रेंद्रियाणां निग्रहसम्बंधेऽपि विंध्यप्लवनदृष्टांतेनासम्बन्धोक्तेः सम्बन्धे सम्बन्धरूपातिशयोक्तिः । वृत्तं पूर्ववत् ॥ ८२ ॥

विश्वामित्र, पराशर इत्यादि बडे ऋषि जो वायु जल और पत्ते खाय पीके रह जाते थे वेभी स्त्रीमुखकमलको देखके मोहको प्राप्त हुए अब जो मनुष्य घी दूध दही इत्यादि अच्छे व्यञ्जन भोजन करते हैं उनकी इंद्रियां जो वशमें हो जांय तो समुद्रपर विंध्याचलके तैरनेमें क्या आश्चर्य है अर्थात् इंद्रियोंको वशमें नहीं कर सकते ॥ ८२ ॥

**परिमलभृतो वाताः शाखा नवांकुरकोटयो ।**
**मधुरविंधुरोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम् ॥**
**विरलविरलस्वेदोद्गारा वधूवदनेन्दवः ।**
**प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ८३ ॥**

प्रासंगिकं परिसमाप्य प्रस्तुतशृंगारोपयोगितया ऋतुवर्णनं प्रारिप्सुस्तदादौ लोकवेदयोः प्राथम्येन व्यवहाराद्वसंतं वर्णयति परिमलेत्यादिषड्भिः-परिमलेति ॥ वाता उपवनपवनाः परिमलं बिभ्रतीति परिमलभृतः । विविधकुसुमसंमर्दजनितगंधविशेषबंधुरा जाता इति शेषः । " विमर्दोत्थे परिमलो गन्धे जनमनोहरे । " इत्यमरः । शाखा रसालादितरुस्कंधाः नवांकुराणि नूतनकिसलयानि कोटिष्वग्रेषु यासां तास्तथोक्ताः पल्लविता जाता इत्यर्थः । पिकपक्षिणां पिकाख्यपक्षिविशेषाणां प्रियाः कोकिलांगना इत्यर्थः । " कोकिलः पिक इत्यपि " इत्यमरः । मधुरा सहकारांकुरकषायास्वादलाभादनुगुणा विधुरा काककृतोपद्रववशाद्विगुणा च कष्टेति यावत् । या उत्कंठा-कुजितौत्सुक्यं तां भजन्तीति तथोक्ताः जाताः । " भजो ण्विः " इति ण्विप्रत्ययः । "विधुरः स्यात्कष्टविश्लिष्टयोरपि " इति विश्वः । वधूनां वद-

---

१ विरतोत्कंठा वाचः इति पाठान्तरम् । २ विरलसुरत इति पाठान्तरम् । ३ रात्र्यां इति पाठान्तरम् ।

नैन्दवो वक्त्रचंद्रा विरलविरलो ग्रीष्मातिरेकाभावान्मंदप्रकारः। "प्रकारे गुणवचनस्य" इति सादृश्यार्थे द्विर्भावः। स्वेदोद्गारः श्रमजलनिष्यंदो येषां ते तथोक्ता जाताः। अत्रोद्गारशब्दस्य गौणवृत्तिसमाश्रयणान्न ग्राम्यकक्षामध्यपतित्वमित्युक्तं प्राक्। तथा हि धात्र्यां भुवि मधौ वसंते प्रसरति व्याप्रियमाणे सति कस्य वस्तुनो गुणोदयो गुणोत्कर्षो न जातः सर्वस्यापि जायत एवेत्यर्थः। "गत्यर्थाकर्मक०" इत्यादिना वर्तमाने कर्तरि क्तप्रत्ययः। "मतिबुद्धिपूजार्थेभ्यश्च" इति चकारात् वर्तमानता। "अथ पुष्परसे मधु दैत्ये वसन्ते चैत्रे च" इति विश्वप्रकाशः॥ ८३॥

सुगंधित पवन चल रही है, वृक्षोंकी शाखाओंमें नये पत्रोंके अंकुर निकले हैं, कोकिलादि पक्षियोंकी वाणी मधुर सुन्दर उत्कंठा भरी प्यारी लगती है और स्त्रियोंके मुखचन्द्रपर रतिश्रमके विलग प्रस्वेद बूंदके कण शोभित हैं ऐसी वसन्तऋतुमें इस भूपर किस किस वस्तुमें गुणकी ज्योति नहीं प्रकाश होती॥ ८३॥

मधुरयं मधुरैरपि कोकिला।
कलरवैर्मलयस्य च वायुभिः॥
विरहिणः प्रहिणास्ति शरीरिणो।
विपदि हन्त सुधाऽपि विषायते॥ ८४॥

अथ पूर्वोक्तो मधुर्वसन्तः सकलचराचरोल्लासकर इति भावः। मधुरैः श्राव्यैः सन्तापहरैर्वा। "शीतलीक्रियते तापो येन तन्मधुरं स्मृतम्।" इति लक्षणात्। कोकिलानां पिकसुन्दरीणां कलरवैरव्यक्तमनोहरस्वरविशेषैः। "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलः" इत्यमरः। कोकिलेत्यत्र जातिग्रहणे कोकिलाजातावपीति न। ङीप् तथा मलयस्य वायुभिः श्रीखण्डशैलानिलैश्च अत्यंतसुखावहैरपीति भावः। विरहिणः शरीरिणो वियोगिजनान् प्रहिणस्ति विनाशयति। तथा हि विपद्यापत्काले सुधा अमृतमपि विषायते विषमिवाचरति। तद्वत्प्राणप्रयासकरी भवतीत्यर्थः। "उपमानादाचारे" इति क्यच्। "अकृत्सार्वधातुकयोर्दीर्घः"

इति दीर्घः। हन्तीति विषादे। " हंत हर्षेऽनुकंपायां वाक्यारंभविषादयोः। " इत्यमरः। सामान्यविशेषणसमर्थनरूपोऽर्थान्तरन्यासः। स च विषाद इत्यत्र उपमाया अंगेन संकीर्यते। अनुप्रासः शाब्दः। द्रुतविलंबितं वृत्तम् ॥ ८४ ॥

मधुर मधुर कोकिलाके शब्द और मलयाचलके पवनसे यह चैत्रमास विरहियोंका वध करता है इससे यह जान पडता है कि विपत्तिमें अमृतभी विष हो जाता है ॥ ८४ ॥

**आवासः किलकिंचितस्यदयिताः पार्श्वेविलासालसाः।**
**कर्णे कोकिलकामिनीकलरवः स्मेरो लतामण्डपः ॥**
**गोष्ठी सत्कविभिःसमं कतिपयैर्मुग्धाःसितांशोः कराः।**
**केषांचित्सुखयन्ति चात्र हृदयं चैत्रे विचित्राःस्रजः ८५ ॥**

विरहिणामेवातिकृच्छ्रं न त्वन्येषामित्याह—आवास इति ॥ पार्श्वे परिसरे किलकिंचितस्य। " रोषाश्रुहर्षभीत्यादेः सङ्करः किलकिंचितम्। " इत्युक्तकिलकिंचितस्य। " रोषाश्रुहर्षभीत्यादेः सङ्करः किलकिंचितम्। " इत्युक्तलक्षणशृंगारचेष्टाविशेषस्यावासो निवासभूताः। अत्राधारविवक्षयैकवचनग्रहणमिति विवेकः। तथा विलासालसाः लीलामन्थराः कटाक्षभुजाक्षेपादिविविधविभ्रमाचरणतत्परा इत्यर्थः। ऐतेनैतासां स्मरमन्दीकृतव्रीडत्वात्प्रागल्भ्यं सूच्यते। दयिताः प्रियतमाश्च। कर्णे कर्णयोरित्यर्थः। " स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण " इति वामनसूत्रे प्रायग्रहणादेकवचनप्रयोगः। कोकिलकामिनीनां कलकण्ठांगनानां कलरवोऽव्यक्तमधुरस्वरश्च। स्मेरः ईषद्विकसितकुसुम इत्यर्थः। अत्र कुसुमधर्मः कुसुमिते उपचर्यते। " ष्मिङ् ईषद्धसने " इति धातोः " नमिकम्पि० " इत्यादिना रप्रत्ययः। लतामंडपो लतागृहं च। कतिपयैः कैश्चिदेव। अन्यथा रसाभासात् सत्कविभिः सरसविचित्रचारुप्रबन्धप्रणयनचतुरतरकवीश्वरैः समं गोष्ठीः प्रसंगश्च। मुग्धा मनोहराः सितांशोः कराश्च। विचित्रा नानाविधाः स्रजः पुष्पमालि-

---

१ काकली इति पाठान्तम्। २ सेव्याः इति पाठान्तरम्। ३ नेत्रहृदये इति पाठान्तरम्। ४ क्षपा इति पाठांतरम्।

काश्च । अत्र अस्मिन् चैत्रे वसंते केषांचिदन्येषामेवत्यर्थः । हृदयं सुखयांति रञ्जयांति। न तु सर्वेषामित्यर्थः । ईदृग्सौभाग्यसंपन्नानां विरलत्वादिति भावः। अत्र खले कपोतन्यायाद्दयितादिबहुकारणानां हृदयरंजनरूपैककार्यसाधन-समुद्योगकथनाद्द्वितीयः समुच्चयालंकारः। तदुक्तं विद्यानाथेन । "खले कपोतन्यायेन बहूनां कार्यसाधने । कारणानां समुद्योगः स द्वितीयः समुच्चयः॥" इति । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

किलकिंचित विलाससे शिथिल हो प्यारीके संग रहना, कानसे कोकिलाके शब्दकी कलकलाहट सुनना और चांदनीका सुख उठाना और विचित्र माला ऐसी सामग्री चैत्रमासमें किसी पुण्यवान्हीके हृदयको सुख देती हैं ॥ ८५ ॥

**पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी ।**
**माकन्देषु पिकांगनाभिरधुना सोत्कण्ठमालोक्यते ॥**
**अल्पा[1]स्ते नवपाटलापरि[2]मलप्राग्भारपाटच्चरा ।**
**वान्ति क्लान्तिवितानतानवकृतःश्रीखण्डशैलानिलाः ८६॥**

पांथस्त्रीति ॥ अधुनेदानीं वसंतसमय इत्यर्थः । पांथस्त्रीणां प्रोषितभर्तृकाणां विरहानलस्य वियोगाग्नेराहुतिकलामाहुतिकलानां तत्साम्यमित्यर्थः । "कला शिल्पे कालभेदे चंद्रांशे कलना कला । " इति वैजयन्ती । आतन्वती आदधाना तद्वदुद्दीपकेत्यर्थः । तनोतेः शतरि "उगितश्च" इति ङीप् । माकंदेषु रसालविशेषेषु विद्यमानेति शेषः । मंजरी पुष्पमंजरी पिकांगनाभिः कोकिलाभिः सोत्कंठमालोक्यते सानंदमुद्वीक्ष्यते इष्टत्वादिति भावः । तथा पाटला फलेरुहाख्यवृक्षविशेषः । "पाटलिः पाटला मोघा काचस्थाली फलेरुहा ।" इत्यमरः । " पुष्पमूलेषु बहुलम् " इति लुपि युक्तवद्व्यक्तिवचने भवतः । नवपाटलापरिमलप्राग्भारस्य नूतनपाटलीकुसुमगंधसंपत्तेः पाटच्चरा मलिम्लुचाः तद्गंधापहारिण इत्यर्थः । तथा क्लांतिवितानस्य क्लांतिसमूहस्य तानवं तनुत्वं कुर्वंतीति क्लांतिवितानतानवकृतः । करोतेः

१ अप्येते इति पाठान्तरम् । २ परिमलाः प्राग्भार इति पाठान्तरम् ।

क्विप् । अल्पा मंदा ते प्रसिद्धाः शैत्यमांद्यसौरभ्ययुक्ताः श्रीखंडशैलानिला मलयमारुताः वांति प्रसरंति । " वा गतिगंधनयोः " इति धातोर्लट् । एतेन विरहिणां दुरंतदुःखजनकत्वसंयुक्तानां परमानंदकत्वं चास्योक्तमित्यवगंतव्यम् । अत्र वियोगाग्निरित्यत्र रूपकमाहुतिकलामित्यत्रोपमया सापेक्षितत्वात्संकीर्णं सच्छाब्देनानुप्रासेन संसृज्यते । वृत्तं पूर्ववत् ॥ ८६ ॥

बटोहियोंकी जो विरहिणी स्त्रियां उनकी विरहाग्निमें आहुति कला फैलाती हुई जो आमके मौर हैं उन्हें कोकिला बडे अभिलाषसे देखती हैं । इस वसन्तऋतुमें ये नवीन पाटल पुष्पके सुगन्धके पुंजको चुरानेवाले और विरह विस्तारको नया करनेवाले मलयाचलके पवनभी गमन करते हैं ॥ ८६ ॥

**प्रथितः[1]प्रणयवतीनां तावत्पदमातनोतु हृदि मानः ॥**
**भवति न यावच्चंदनतरुसुरभि[2]र्मलयपवमानः ॥ ८७ ॥**

प्रथित इति॥ प्रथितः प्रसिद्धः दृढतर इति यावत् । मानः प्रियतमस्यान्यस्त्रीसंगित्वजनितेर्ष्याकृतकोपः । "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये । श्रुते वानुमिते दृष्टे " इति दशरूपे । प्रणयवतीनां प्रियतमानां हृदि तावत्तावत्पर्यंतं पदं स्थानमातनोतु करोतु तिष्ठत्वित्यर्थः । संभावनायां लोट् । " पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु । " इत्यमरः । कियत्पर्यंतामित्यत आह । चंदनतरुसुरभिः श्रीखंडद्रुमपरिशीलनसुगंधिः । " सुगंधौ च मनोज्ञे च सुरभिर्वाच्यलिंगवत् । " इति विश्वः । मलयपवमानो मलयमारुतो यावत्पर्यंतं न भवति न प्रसरति तावदिति संबंधः । सामान्यस्य विशेषपर्यवसानात्प्रसरणार्थत्वं भुवो द्रष्टव्यम् । " यावत्तावच्च साकल्येऽवधौ मानावधारणे । " इत्यमरः । अस्यात्यंतोद्दीपकत्वान्मानिन्योऽतिदृढमपि निजमानं विहाय प्रियतमपरतंत्राः स्वयमेव भवंतीत्यर्थः । आर्याभेदः ॥ ८७ ॥

---

१ प्रियपरतो युवतीनां इति पाठांतरम् । २ मधुसुनिर्मलः पवनः इति पाठांतरम् ।

प्रणयवाली स्त्रियोंके हृदयमें यह प्रसिद्ध मान तभीलौं ठहरता है जब-लौं चंदनकी सुगंधभरी मलयाचलकी स्वच्छ वायु नहीं चलती ॥८७॥

**सहकारकुसुमकेशरनिकरभरामोदमूर्च्छितदिगन्ते ॥**
**मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ८८ ॥**

सहकारेति ॥ सहकारकुसुमानां रसालविशेषप्रसूनानाम्। " आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः । " इत्यमरः । ये केशरनिकराः किंज-ल्कपुञ्जास्तेषां ये भराः समृद्धयस्तेषामामोदेन परिमलविशेषेण मूर्च्छित व्याप्ता दिगंता यस्मिन् तस्मिन् मधुरेण माधुर्यगुणयुक्तेन मधुना मकरंदेन विधुरा विह्वला उन्मत्ता इति यावत् । मधुपा भृंगा यस्मिन् तस्मिन् इत्थम-स्योक्तमुद्दीपकत्वमित्यर्थः । मधौ वसंते कस्य जनस्य स्त्रियो वा पुरुषस्य वेत्यर्थः । उत्कंठा संभोगौत्सुक्यं न भवेन्नोत्पद्येत अतः सर्वस्यापि उत्पद्यत एवेत्यर्थ । अतो मानत्यागो युज्यत इति भावः । अनुप्रासश्च शब्दालंकारः। वृत्तं पूर्ववत् ॥ ८८ ॥

आमके मोरकी जो केसर उसके समूहकी सुगन्ध दिशाओंमें छाय रही और मीठे मीठे मकरन्द पानकर जिसमें भ्रमर उन्मत्त हो रहे हैं ऐसे ऋतुराज वसन्तमें किसे उत्कण्ठा नहीं होती ॥ ८८ ॥

**अच्छाच्छचन्दनरसार्द्रतरा मृगाक्ष्यो ।**
**धारागृहाणि कुसुमानि च कौमुदी च ॥**
**मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं ।**
**ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति ॥ ८९ ॥**

अथ त्रिभिर्ग्रीष्मं वर्णयति—अच्छोच्छाति ॥ अच्छाच्छोऽतिस्वच्छो यश्चं-दनरसः पटीरद्रवः । " गुणे रागे द्रवे रसः " इत्यमरः । तेनार्द्रतरा अत्यं-तार्द्राः सन्तापशांत्यर्थं सांद्रचन्दनपंकचर्चितांगा इत्यर्थः । मृगाक्ष्यस्तरुण्यश्च, धारागृहाणि जलयन्त्रवेश्मानि, कुसुमानि मल्लिकादीनि, कौमुदी चन्द्रिका

---

१ रसार्द्रकला इति पाठांतरम् ।

च सुमनसो जात्याः सम्बन्धी ग्रीष्मेऽतिविकाससम्भवात्तत्कुसुमपरिशीलन-जनितामोदभरित इत्यर्थः । "सुमना मालती जाती" इत्यमरः । मन्दो मरुत् मन्थरगन्धवाहश्च, शुचि शुभ्रं सुधालेपनेनेति भावः । हर्म्यपृष्ठं सौधोपरिप्रदेशश्चेति ग्रीष्मे ऋतौ मदं हर्षव्यतिकरं मदनं च विवर्धयन्त्युद्दीपयन्ति । अत्रापि द्वितीयसमुच्चयालङ्कार उन्नेयः ॥ ८९ ॥

अतिस्वच्छ चन्दनके रससे जिन स्त्रियोंका अंग चर्चित है ऐसी स्त्रियें, फुहारेवाले मन्दिर, मन्द सुगन्धित पुष्प, विकसित चांदनी, सुगन्धित लता, मन्द मन्द पवन और महलकी श्वेत छत ये सब सामग्री ग्रीष्मऋतुमें कामदेवको और मदको बढाते हैं ॥ ८९ ॥

**स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः ।**
**परागः कासारो मलयजरजः शीधु विशदम् ॥**
**शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो ।**
**निदाघर्तावेतद्विलसति लभते सुकृतिनः ॥ ९० ॥**

स्रज इति ॥ हृद्यामोदा मनोहरगन्धाः स्रजः पुष्पमालिकाश्च । व्यजनपवनस्तालवृन्तसमीरणश्च । "व्यजनं तालवृंतकम्" इत्यमरः । चन्द्रकिरणाश्च, परागः सुमनोरजश्च, कासारः क्रीडासरश्च, मलयजरजश्चन्दनक्षोदश्च, विशदं निर्मलं शेरते अनेनेति शीधु मद्यं च । "शीङो धुक्" इत्यौणादिको धुक्प्रत्ययः । शुचिः शुभ्रो विहारयोग्य इत्यर्थः । सौधोत्सङ्गः प्रासादप्रदेशश्च, प्रतनु वसनं सूक्ष्मांबरं, पङ्कजदृशः पद्मपलाशलोचनाश्चेत्येतत्सर्वं भोगसाधनम् । "नपुंसकं०" इत्यादिना नपुंसकैकशेषः । निदाघर्तौ ग्रीष्मर्तौ । "आद्गुणः" इति रपरो गुणः । विलसति विजृम्भमाणे सति सुकृतिनः पुण्यशालिनो लभन्ते प्राप्नुवन्ति । कथमसुकृतानामीदृग्भोगसाधनलाभ इति भावः । शिखरिणी वृत्तम् ॥ ९० ॥

अच्छी सुगन्धित माला, पंखेका वायु, चांदनी, पुष्पोंका पराग, तडाग, चंदन, उज्ज्वल मद्य, श्वेत धामकी अच्छी ऊंची छत, अच्छे

१ निदाघे तूर्णं तत्सुखमुप० इति पाठांतरम् ।

